श्रीः

-*-

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्त्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दामोदमोहितम् ॥ २ ॥

स्तवकः—४४

र्थवान् तृतीयाप्रत्ययेनोपस्थाप्य: एतेन सकलव्यापारसा-
धारणैकरूपाभावेन न शक्त्यैक्यं तत्तद्रूपेण शक्तिस्वीकारे
नानार्थता युगसहस्रेणाप्यग्रहस्येति निरस्तम् । यदाधा-
रादिव्यापारो धातुनाऽनभिधीयमानः क्रियाजनकतया
विवक्षितस्तदाऽऽधारादिकारकगण: करणमेव । तदाहु: ।

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।
विवक्ष्यते यदा यत्र करणं तत्तदा मतम् ॥
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम् ।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥

वस्तुव्यवस्थितिविरहेणानिर्देश्यत्वादेव विवक्षाऽधीनत्वं करणस्येति कारकान्तरेऽपीयमेव गतिरिति विवक्षाऽधीनत्वमपादानादीनामत एव विवक्षातः कारकाणि भवन्तीति प्रवादः । अत्र व्यापाराश्रयः करणतृतीयार्थ इति शाब्दिकाः । तन्न विचारसहं व्यापारस्य शक्यत्वे लाघवात् तदाश्रयस्य तथात्वे गौरवात् किं च व्यापारस्य धात्वर्थे जन्यत्वेन संसर्गेण साक्षादन्वयस्तदाश्रयस्य तु स्वव्यापारजन्यत्वसंसर्गेण परम्पराऽन्वय इति वह्निना पचतीत्यत्र तृतीयार्थ ऊर्ध्वज्वलनव्यापारो जन्यत्वसंसर्गेण पाकेऽन्वेति वह्न्यूर्ध्वज्वलनजन्यपाककृतिरित्यन्वयबोधः । अनुभवेन स्मरति योगेन स्वर्गच्छति चक्षुषा पश्यतीत्यादौ तृतीयार्थेषु संस्कारापूर्वसंनिकर्षेषु प्रकृत्यर्थानां जन्यत्वसंसर्गेणान्वयः श्रोत्रेण शृणोतीत्यत्र तृतीयार्थे शब्दावच्छिन्नसमवाये सविशेषणे हीतिन्यायेन श्रोत्रस्य अन्यतासंसर्गेण शब्देऽन्वयः पर्यवस्यति यथा रूपं चक्षुषा पश्यतीत्यत्र संयोगी क्वचिज्जन्यत्वातिरिक्तसंसर्गेणापि तृ-

मीयार्थे प्रकृत्यर्थस्यान्वयः यथा चिकीर्षया प्रवर्तते परामर्शेनानुमिमीते इत्यादौ तृतीयार्थे समवाये चिकीर्षापरामर्शयोः स्वप्रतियोगिताकत्वसंसर्गेणान्वयः यदि च शृणोतेः प्रत्यक्षार्थकत्वेऽपि शब्देन शृणोतीतिप्रयोगस्तदा शब्दस्यापूर्ववत्समवायेऽन्वय इति वदन्ति । अन्ये तु सर्वत्र करणतृतीयार्थे प्रकृत्यर्थस्य जन्यजनकभावसंसर्गेणैवान्वयः परामर्शेनानुमिमीत इत्यादौ दण्डेन घट इत्यत्रेव हेतौ तृतीया न तु करणे इत्याहुः । अत्र वदन्ति । अनुमानीयः परामर्श इत्यत्र करणे छप्रत्ययस्य दर्शनात्परामर्शेनानुमिमीत इत्यत्र करणे तृतीया न तु हेतौ करणत्वं तु फलोपधायकत्वं तत्रोपहितत्वं करणतृतीयार्थः हेतुतृतीयायास्तु स्वरूपयोग्यत्वमर्थं इति । तच्चिन्त्यं पटीयास्तन्तव ओदनीयः पाक इत्यादाविव हेतुत्वार्थकेन संबन्धार्थकेन वा छप्रत्ययेन दर्शितप्रयोगोपपादनसम्भवात् उपहितत्वस्य कार्याव्यवहितपूर्वक्षणवृत्तित्वस्वरूपस्य कार्यविशेषाणामन्यत्वभग्रानामज्ञाने दुर्ग्रहस्य कार्यविशेषाणामननुगमेन तत्तत्कार्यव्यक्तीनामननुगततयाऽव्यवहितपूर्वक्षणस्याननुगमेन चात्यननुगतत्वात्तृतीयार्थत्वासम्भवाच्च व्यापारस्य तृतीयार्थत्वे तु प्रकृत्यर्थस्य व्यापारे तस्य च धात्वर्थे जन्यत्वसंसर्गेणान्वयान्नाननुगमशङ्काऽपीति । अत एव सव्यापारकं कारणं करणमिति करणस्य स्वजन्यः सन् स्वजन्यजनको व्यापार इति व्यापारस्य च लक्षणं संगच्छते । ननु घटादौ दण्डादेर्व्यापारद्वारा हेतुत्वमत एव शब्दादौ भिन्नदण्डकाष्ठादेश्च चक्रभ्रमिविरहितस्या-

दिजनकत्वं स्वनिष्ठस्पन्दज्वलनद्वारेत्युक्तं तथा च दण्डेन घट इत्यत्र सव्यापारकहेतुत्वस्य तृतीयार्थतया तस्य च नामार्थान्वयेन करणत्वस्य कारकत्वहानिरिति चेन्न व्यापारस्य करणतृतीयार्थतया तस्य च जन्यत्वसंसर्गेण धात्वर्थ एवान्वयेन कारकत्वानपायात् हेतुत्वमर्थस्तच्च साक्षात्परम्परासाधारणमित्यादिकं वक्ष्यते । द्वितीयार्थोऽपि व्यापारो दिवोऽर्थेऽन्वेतीति ज्ञापयितुं "दिवः कर्म चेति सूत्रं" दिवः साधकतमं कर्म करणं च भवतीत्येतदर्थकं चकारः संज्ञाद्वयार्थकः अत एव मनसादेव इत्यत्र करणसंज्ञाप्रयुक्ता तृतीया कर्मसंज्ञाबलात्कर्मोपपदप्रयुक्तोऽण्प्रत्ययः "मनसः संज्ञायामि" त्यनुशासनेन तृतीयाया अलुक् एवमक्षैरक्षान्वा दीव्यतीत्युभयविधप्रयोगः साधुः केचित्तु दिवः साधकतमे करणसंज्ञाप्रयुक्तकार्यं देवना अक्षा इत्यत्र ल्युट् कर्मसंज्ञाप्रयुक्तं तु अक्षा दीव्यन्त इत्यत्र लः देवनीया इत्यादावनीयरादिः प्रत्ययः अक्षैर्दीव्यन्तीत्यत्र च संज्ञाद्वयप्रसक्तौ परया तृतीयया द्वितीयाया बाध इत्यक्षान्दीव्यतीति न प्रमाणमिति वदन्ति । तन्न विचारसहं तृतीयाया द्वितीयाबाधकत्वे बीजीभूतानुशासनविरहात् प्रत्युत परया कर्मसंज्ञया तत्प्रयुक्तद्वितीयादिकार्येण वा करणसंज्ञायास्तत्प्रयुक्ततृतीयादिकार्यस्य वा बाधापत्तेः न चैवमेवास्तु अक्षान्दीव्यतीत्येव प्रमाणं न चाक्षैर्दीव्यतीति दीव्यतियोगे तृतीयाद्वितीयोभयप्रयोगोऽसाधुरेवेति वाच्यं तथा सति "दिवः कर्म चे"ति सूत्रे चकारवैयर्थ्यप्रसङ्गात् । न च काचित्कसंज्ञाद्वयप्रयुक्तस्य ल्युट्कर्मख्यातादिकार्यस्योप-

पादकतया चकारः सार्थक इति वाच्यं क्वाचित्ककार्यो-पपादकत्वे बीजविरहेण विशेषेण कार्यद्वयोपपादकत-यै वैच्छिकविकल्पार्थकस्य चशब्दस्य सार्थकत्वसम्भवात् । एवमक्षैरक्षान्वा दीव्यति मल्ल इत्यत्र दीव्यतेः क्रीडा सा तु सुखव्यापारोभयं सुखमेव वाऽर्थः तृतीयाद्वितीययोः पातस्वरूपो व्यापारोऽर्थः तथा चाक्षजन्यपातजन्यस्य सुखानुकूलव्यापारस्य सुखस्य वाऽनुकूलकृतिमान्मल्ल इति शाब्दबोधः । न चात्र धात्वर्थफले सुखे आधेयत्व-स्वरूपं कर्मत्वं द्वितीया बोधयितुमीष्टे सुखादावक्षाधेय-त्वस्य बाधादिति द्वितीयाया अपि व्यापारोऽर्थः अत एव देवना अक्षा इत्यत्र व्यापाराश्रयस्य करणस्य ल्युटाऽभि-धानान्न व्यापारार्थिका द्वितीया । एवमक्षा दीव्यन्ते दे-वनीया वेत्यत्र तिङा व्यापारस्य तदाश्रयस्यानीयरा-ऽभिधानान्न व्यापारार्थिका करणतृतीया "अनभिहित इति निषेधादिति । द्वितीयायाः करणत्वमिव तृतीयाया अपि कर्मत्वमर्थ इत्यावेदयितुं "संज्ञोऽन्यतरस्यां कर्मणी" ति सूत्रम् । सम्पूर्वस्य जानातेः कर्मणि तृतीया द्वितीय वा स्यादित्यर्थकं पित्रा पितरं वा संजानीत इत्यत्र सं-जानातेः संज्ञानमसाधारणधर्मेण ज्ञानमर्थस्तृतीयाद्वि-तीययोर्विषयतास्वरूपं कर्मत्वमर्थः अथ वाऽऽधेयत्वस्वरू-पमेव कर्मत्वमिष्टाप्यर्थः विषयतायाः पूर्वोक्तयुक्त्या धा-त्वर्थफलत्वावश्यकत्वात् तथा च पितृविषयताकं पितृ-वृत्तिविषयताकं वा ज्ञानं वाक्यार्थः सज्ञानीत इत्यत्र "संप्रतिभ्यामनाध्याने" इत्यनुशासनेन संपूर्वकात् प्रतिपू-र्वकाच्च ज्ञ आत्मनेपदं भवति यद्याध्यानं स्मरणं नार्थ इ-

त्यर्थकेन सिद्धमात्मनेपदम्। आध्याने तु मात्रा मातरं-वा संजानातीत्येव प्रमाणम्। केचित्तु आध्याने मातरं-मातुर्वा सञ्जानातीत्येव साधु "अधीगर्थे" ति सूत्रेण वि-हितया षष्ठ्या तृतीयाया बाधात् अत एव कृद्योगष-ष्ठ्या तृतीयाया बाधः पितुः संज्ञानमित्यादावित्याहुः। तन्न विचारसहं षष्ठ्या तृतीयाया बाधे द्वितीयाया अपि बाधापत्तेर्युक्तेस्तौल्यात् पितुः संज्ञानं संज्ञा वेत्यत्र वृत्तिकारमते कृद्योगे कर्मार्थकषष्ठ्या कर्मप्रत्ययस्य द्वि-तीयातृतीयादेर्बाध इति नात्र तृतीयादेः प्रसक्तिरिति। हविकर्मण्यपि तृतीयां ज्ञापयति "तृतीया च होश्छन्दसी" ति सूत्रं छन्दसि होर्हुवेः कर्मणि तृतीया स्याच्चकाराद्-द्वितीयाऽपीत्यर्थकं यवाग्वा जुहोति यवागूं जुहोतीत्यादौ-जुहोतेर्वह्निसंयोगफलकस्वाहाकरणकप्रक्षेपोऽर्थस्तत्र वह्नि संयोगान्वय्याधेयत्वस्वरूपं कर्मत्वं तृतीयाद्वितीययोरर्थः तथा च यवागूवृत्तिवह्निसंयोगफलकस्वाहाकरणकप्र-क्षेपकर्तृत्वं वाक्यार्थः लोके तु घृतं जुहोतीत्यादौ न तृतीयेति। "अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृ-तीया स्यादि" ति दास्या संयच्छते कामुक इत्यत्र तृतीया अशिष्टो वेदनिषिद्धकर्ता, व्यवहार इति निमित्तसप्त-मी तथा च वेदनिषिद्धव्यवहारप्रयोजकस्त्रेहाणोऽर्थस्तदा चतुर्थ्यर्थे तृतीया भवति अत एव "दाणश्च सा चेच्चतुर्थ्य-र्थे" इत्यनुशासनेन सम्पूर्वकाद्दाण आत्मनेपदं भवति यदि चतुर्थ्यर्थिकया तृतीयया योगो भवतीत्यर्थकेनात्म-नेपदं साधयता संप्रदानत्वार्थिका तृतीयाऽपि साध्यते। अत्र वेदनिषिद्धव्यवहारप्रयोजकत्वं वेदनिषिद्धत्वं वा

पापानुगुणत्वं न धातोर्न वा तृतीयाया अर्थ इति न शाब्दबुद्धिविषयः किं तु शाब्दानन्तरं मानान्तरगम्यं दाणस्तु दानमर्थः तत्स्वरूपसत्पापानुगुणमिहापेक्षितमतै-वात्मनेपदं साधु तृतीयायाः संप्रदानत्वमर्थः दानसंप्रदानत्वयोः स्वरूपं चतुर्थीविवरणे वक्ष्यते एवं दासीसंप्रदानकदानकर्ता कामुक इति शाब्दबोधः पापाननुगुणदाने तु भार्यायै संयच्छतीति चतुर्थीपरस्मैपदयोरेव साधुत्वमिति। फलोपहितार्थकधातुयोगे कालाध्वशब्दात्तृतीयेति ज्ञापयितुम्। "अपवर्गे तृतीये"त्यनुशासनम्। अपवर्गे फलप्राप्तौ सत्यां कालाध्वशब्दाभ्यामत्यन्तसंयोगेऽर्थे तृतीया भवतीत्यर्थकं अपवर्गः फलं यदिच्छाप्रयोज्याचारविषयः क्रिया तत्फलं प्राप्तिस्तद्रूपधानं तथा च यत्र फलोपहितो धात्वर्थस्तत्रात्यन्तसंयोगार्थिका तृतीया अत्यन्तसंयोगः कालिकं दैशिकं वा व्यापकत्वं द्वितीया विवरणोक्तं स्मर्तव्यम्। एवमन्हा क्रोशेन वाऽनुवाकोऽधीत इत्यत्राध्ययनमुच्चारणमनुसंधानं वा धात्वर्थः दृढसंस्कारोपहितमध्ययनमिह धातुनोपस्थाप्यते तत्र धात्वर्थे तृतीयार्थोऽत्यन्तसंयोगोऽन्वेति तथा चाह्नव्यापकस्य क्रोशव्यापकस्य वा दृढसंस्कारोपहिताध्ययनस्य कर्मानुवाक इति शाब्दबोधः। दैशिकव्यापकत्वं कर्तृघटितपरम्परासंसर्गावच्छिन्नमिह बोध्यमिति। यत्र फलोपहिता न क्रिया तत्र मासमधीतोऽपि नाध्यस्तोऽनुवाक इति द्वितीयैव प्रमाणम्। अत्र फलानुपहितमेवाध्ययनादिकं धात्वर्थः अत्यन्तसंयोगमात्रं तृतीयार्थः अपवर्गस्तु व्यञ्जनागम्यः दिवसेन भवानयुद्ध-

त्यत्र दिवसाभिव्यापकं भवत्कर्तृकमतीतयुद्धमिति प्रथमबोधः विजयफलकं तथाविधयुद्धमिति वैयञ्जनिकाबोध इत्यालङ्कारिकाः । तन्न सुन्दरं तत्र शत्रुर्दिवसमयुद्ध न तु दिवसेनेत्यत्रान्वयबोधानुपपत्तेः फलानुपहितक्रियामात्रस्य धात्वर्थत्वे युद्धे दिवसादिव्यापकत्वशत्रुकर्तृकत्वयोरवगमेन तदेकतरस्यापि निषेधप्रतीतेरसम्भवात् तस्मात्कालादिशब्दोत्तरतृतीयाः समभिव्याहारे फलोपहितक्रियायां धातुर्लाक्षणिक इति न तु दिवसेनेत्यत्र विजयफलकयुद्धं धात्वर्थः तथा च विजयफलकदिवसाभिव्यापकयुद्धे शत्रुकर्तृकत्वाभावस्य शत्रौ तथाविधयुद्धकर्तृत्वाभावस्य वा प्रतीतिसम्भवान्निषेधप्रतीत्युपपत्तिः दिवसाभिव्यापकयुद्धे शत्रुकर्तृकत्वप्रतीतेः शत्रौ तथाविधयुद्धकर्तृत्वप्रतीतेर्वा विरोधाभावात् घटवान् नीलघटाभाववानिति वदिति पदवाक्यरत्नाकरे गुरुचरणाः ।

इति कारकतृतीयार्थनिर्णयः ।

नामार्थान्वयिनस्तृतीयार्था अकारकतया संज्ञायन्ते तत्र नानार्थिकां तृतीयां ज्ञापयति । "प्रकृत्यादिभ्य उपसंख्यानमि"ति वार्त्तिकं प्रकृत्या चार्वित्यत्र सुखजनकस्य साक्षात्कारस्य ज्ञानसामान्यस्य वा विषयेण धर्मेण विशिष्टश्चारुपदार्थः चारुपर्याया अभिरामहृद्यसुन्दरमञ्जुलादयः । मनसोऽभिराम इत्यत्र षष्ठ्यर्थो जन्यत्वं तथाविधे साक्षात्कारे ज्ञानसामान्ये वाऽन्वेति मनोऽभिराम इत्यत्राभिरामशब्दस्य सुखजनकमानसविषयधर्मविशिष्टे लक्षणा मनःपदं तात्पर्यग्राहकम् । प्रकृतिपदार्थस्तु स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्म-

वानसाधारणो धर्मः भवति च सतो जातिः प्रकृतिरित्यादौ जात्यादिस्तथा असाधारण्यविशेषणात् घटस्य गुणो जातिर्वा प्रकृतिरिति न प्रयोगः प्रयोगस्तु कम्बुग्रीवादिमत्त्वं प्रकृतिरिति । जलस्य शैत्यं पृथिव्या गन्धस्तेजस औष्ण्यं प्रकृतिरित्यादौ शैत्यगन्धौष्ण्यानां संग्रहाय स्थूलकालावच्छिन्नत्वं स्वाश्रयनिष्ठात्यन्ताभावे विशेषणं देयमिति । यदि च संयोगो द्रव्यस्य मत्सरः खलस्य चैतन्यमात्मनः प्रकृतिरित्यादिप्रयोगस्तदा देशानवच्छिन्नविशेषणतया स्वाश्रये स्थूलकालावच्छेदेन वर्तमानस्यात्यन्ताभावस्य प्रतियोगितानवच्छेदकधर्मवानसाधारणो धर्मः प्रकृतिरिति द्रव्ये वृक्षादौ मूलाद्यवच्छेदेन संयोगस्य खले मत्सरस्य आत्मनि ज्ञानस्य घटाद्यवच्छेदेन स्थूलकालावच्छेदेन वर्तमानोऽप्यत्यन्ताभावो न देशानवच्छिन्नविशेषणतयाऽस्तीति नासंग्रहः । वस्तुतस्तु भूयःकालिकस्वाश्रयनिरूप्यसत्तावांस्तादृशो धर्मः प्रकृतिस्तावतैव सर्वसामञ्जस्यात् यदि च पृथिव्या गन्धप्रागभावो रक्तप्रागभावो वा गन्धनाशो रक्तनाशो वा प्रकृतिरिति न प्रयोगस्तदा स्वसंबन्धिनि प्रतियोगिजातीयासमानकालिकस्य विद्यमानस्य नाशस्य प्रागभावस्य चाप्रतियोगी तादृशो धर्मः प्रकृतिरिति तथाविधनाशप्रागभावप्रतियोगिनौ प्रागभावनाशौ न तथासंयोगमत्सरज्ञानानां नाशप्रागभावे स्वसंबन्धिनि विद्यमानौ न प्रतियोगिजातीयासमानकालिकाविति न तेषामसंग्रहः । यद्वा स्वसंबन्धितावच्छेदकसमनियतो धर्मः प्रकृतिः समनियमघटकव्यापकत्वद्वये प्रतियोगिवैयधिक-

रण्यं निवेशनीयं तच्च प्रतियोगिकालावच्छेदेन प्रतियोग्यधिकरणे वर्तमानेभ्योऽन्यत्वं तेन द्रव्यस्य संयोगः संयोगवतो द्रव्यत्वं प्रकृतिरित्युपपद्यते प्रतियोगिकालावच्छिन्नत्वस्य निवेशात् प्रागभावनाशयोर्न प्रकृतित्वं प्रागभावनाशयोरत्यन्ताभावस्तत्कालावच्छेदेन तदधिकरणे न वर्तमान इति तयोर्न संबन्धितावच्छेदकत्वव्यापकत्वं चित्ररूपाद्यनभ्युपगमात्प्रादेशिकाव्याप्यवृत्तेर्गन्धादेरत्यन्ताभावस्य प्रतियोगिकालेऽपि सत्वान्न व्यापकत्वहानिरिति चित्राभ्युपगमे तु वस्तुतः कल्पोऽनुसरणीय इति प्रकृतिपदोत्तरतृतीयायास्तादात्म्यमर्थस्तच्चापरपदार्थतावच्छेदकेऽन्वयितावच्छेदके वाऽन्वेति इत्थं च प्रकृत्यभिन्नचारुत्ववानिति वाक्यार्थबोधः । एवं नाम्ना सुतीक्ष्णश्चरितेन दान्त इत्यत्रापि तृतीयायास्तादात्म्यमर्थः सुतीक्ष्णपदस्य सुतीक्ष्णपदप्रतिपाद्ये लक्षणा नाम वाचकं चरितमाचारस्य प्रयत्नस्य विषयः दम इन्द्रियनिग्रहादिः तथा च नामाभिन्नसुतीक्ष्णपदप्रतिपाद्यः चरिताभिन्नदमशील इत्यन्वयबोधः सुरथो नाम राजाऽभूदित्यादौ नामेति तादात्म्यार्थकलुप्ततृतीयान्तं सम्भावनार्थकं वाऽव्ययं गोत्रेण गार्ग्य इत्यादौ तृतीयायास्तादात्म्यमर्थः गोत्रशब्दार्थस्तु वंशप्रवर्तक पुरुषो ब्रह्मर्षिः वंशपदार्थस्तु प्रवर्तकस्याप्रवर्तकस्य वा पुरुषस्योत्तरकालिकः स्वारम्भकशुक्रपरमाणुभिः परम्परयाऽऽरभ्यमाणः उत्तरकालिकत्वनिवेशात्पराशरस्य वंशो वसिष्ठ इति न प्रयोगः किं तु वसिष्ठस्य पराशर इति प्रवर्तकशब्दार्थस्तु दर्शितवंशत्वस्वरूपशक्यसंबन्धेन स्वसंज्ञाशब्दस्य नि-

रूढोपचारकः तथा निरूढोपचारका यथा गौतमा गर्गाः शाण्डिल्या इत्यादौ गौतमादयः पुरुषाः स्ववंशे स्वसंज्ञोपचारकाः ब्रह्मऋषिशब्दार्थस्तु ऋषिस्वरूपो ब्राह्मणः एवं वंशमात्रार्थकत्वे तु चैत्रमैत्रगोत्रा एते इति प्रयोगस्य वारणार्थमुपात्तेऽपि प्रवर्तकत्वे विशेषणे एते रघवो यदवः कुरवो रघुयदुकुरुगोत्रा एते इति प्रयोगवारणाय ब्रह्मर्षित्वं विशेषणं न च दर्शितप्रयोगवारणाय ब्राह्मणत्वमेव विशेषणमस्तु किमृषित्वनिवेशेनेति वाच्यं दर्शितोपचारकत्वेऽपि न ब्राह्मणत्वमात्रं तन्त्रं तथासति प्रभाकराः कुमारिला उदयना एते इति प्रयोगप्रसङ्गः किं तु ऋषित्वं तदर्थमेवात्र तत्प्रदर्शनं वस्तुतो गोत्रलक्षणे न तन्निवेश इति पत्न्यां पतिसागोत्र्यव्यपदेशो गौणधर्मशास्त्रातिदेशात् पितृसागोत्र्यव्यपदेशनिवृत्तिरपि तत एव अत एव कन्यादानवाक्यं पितृगोत्रघटितमेव गार्ग्यमित्यत्र तद्धितार्थोऽपत्यं तच्च वंश एव एवं तृतीयार्थाभेदस्य गर्गपदार्थेऽन्वयः तथा सति गोत्राभिन्नगर्गापत्यमिति शाब्दबोधः। धान्येन धनीत्यादौ धनपदार्थे तृतीयार्थाभेदान्वयः जात्या ब्राह्मण इत्यत्र जात्यभेदो ब्राह्मणेऽन्वीयमानः सविशेषणे हीतिन्यायेन ब्राह्मणत्वमादाय पर्यवस्यति न च तृतीयार्थोऽभेदः पदार्थैकदेश एवान्वेतीति नियम इति वाच्यम्। ईदृशनियमे मानाभावात् यत्र पदार्थे सविशेषणे हीतिन्यायेनापि प्रथमतृतीयार्थोऽभेदो नान्वेतुमर्हति तत्रैव पदार्थस्यान्वयिनोऽन्वयितावच्छेदकस्य वैकदेशेऽन्वेति यत्र तु पदार्थेऽन्वेतुमर्हति तत्र पदार्थ एवान्वेति यथा पृथिव्यादीनां नवानां द्रव्यत्वेन

गुणवत्त्वेन वा साधर्म्यमित्यत्र द्रव्यत्वाद्यभेदस्तृतीयान्तार्थः साधर्म्यशब्दार्थे समानधर्मे ऽन्वेति यथा वा वाजपेयेन यजेतेत्यादौ वाजपेयाद्यभेदस्तृतीयान्तार्थो धात्वर्थयागादावन्वेति एवमर्घादिकया सपर्यया पर्यपूपुजदित्यादौ विशेषणान्तरविशेषितसपर्यादितादात्म्यं धात्वर्थे शुद्धसपर्यादौ तृतीया बोधयति अविशेषितस्यैकधर्मावच्छिन्नस्य तादात्म्यसंसर्गेणान्वयो निराकाङ्क्षत्वबाधितो न तु तादात्म्यविशेषणको नितरां विशेषणान्तरविशेषितस्येति ननु धात्वर्थविशेषणे तृतीयाऽपि द्वितीयेव साधुत्वार्था तृतीयान्तार्थस्य द्वितीयान्तार्थस्येव तादात्म्यसंसर्गेणैव धात्वर्थेऽन्वयो न तु तादात्म्यविशेषेण इति चेत्तर्हि कथं सपर्यया पर्यपूपुजदित्यत्रान्वयोपपत्तिः न च विशेषणान्तरविशेषितस्यैकधर्मावच्छिन्नस्यापि तादात्म्येनान्वयो भवत्येव यथा प्रमाऽनुभव इत्यत्र प्रमाशब्दार्थस्य यथार्थानुभवस्यानुभवे यथा वा भूर्वरा देशो राजन्वानित्यत्र सर्वसस्यवद्भूमेर्भुवि सुराजदेशस्य देशे तादात्म्यान्वयस्तथा प्रकृतेऽपि अर्घ्यदानादिसपर्यायाः सपर्यायां वाजपेयेन यजेतेत्यादौ वाजपेयादेर्धात्वर्थयागादौ तादात्म्यान्वय इति वाच्यं धात्वर्थविशेषणे द्वितीयाया एव साधुत्वज्ञापकानुशासनस्य सत्त्वेन तृतीयायास्तथानुशासनविरहात् प्रकृतानुशासनस्य तथात्वोपगमे प्रकृत्या चार्वित्यादेरनन्वयापत्तेः नामार्थयोस्तादात्म्यसंसर्गेणान्वये समानविभक्तिकत्वस्य तन्त्रत्वात् तृतीयायास्तादात्म्यार्थकत्वे तु प्रकृते तादात्म्यप्रकारकान्वयबोधसम्भवात् तथाऽन्वयबोधे समानविभक्तिकत्वस्यातन्त्रत्वात् अत एव द्रव्यत्वेन सा-

मर्थ्यमित्यत्र द्रव्यत्वस्य समानधर्मे द्रोणैः षोडशभिः खारीत्यत्र षोडशानां द्रोणानां खारीपदवाच्ये तादात्म्यप्रकारकोऽन्वयबोधः । नन्वेवं कुटिलेन दण्ड इति कथं न प्रयोग इति चेत्कुटिलादिशब्दानां प्रकृत्यादिगणपठितशब्दापर्यायत्वादेवाप्रयोग इति । एवमर्घ्यादिना पर्यपूपुजदित्येतावतैव सामञ्जस्ये सपर्ययेत्यादिकमपुष्टार्थं न तु निराकाङ्क्षमिति । समवायेन लौहित्यवज्जपापुष्पं समवायिसंयोगेन स्फटिकशकलमित्यत्र तृतीयार्थस्तादात्म्यं मतुबर्थतावच्छेदके संबन्धेऽन्वेति तेजसा सूर्यो दानेन कल्पतरुरयमित्यादौ सूर्यादिपदस्य सूर्यादिसदृशे लक्षणा सूर्यसादृश्ये तेजसः कल्पतरुसादृश्ये दानस्य तादात्म्यं तृतीयार्थोऽन्वेति अथ वा समवायेन नीलः पटः कालिकेन स्पन्द इत्यादौ तृतीयान्तसमभिव्याहारः समवायकालिकादिसंसर्गकनीलविशिष्टशाब्दधियं जनयति यथा तथा प्रकृतेऽपि तेजसेत्यादि तृतीयान्तसमभिव्याहारस्तेजोदानादिस्वरूपतादात्म्यसंसर्गकसूर्यकल्पपादपादिविशिष्टशाब्दं जनयति अतः संसर्गानुवादिका तृतीयेति अवच्छेदकत्वमपि क्वचित्तृतीयार्थः यथा वन्हित्वेन वन्हेर्जनकत्वं जन्यत्वं प्रतियोगित्वं प्रकारत्वं विशेष्यत्वं वेत्यादौ तृतीयाया अवच्छेदकत्वमर्थः तच्चाधेयतासंबन्धेन प्रातिपदिकार्थेनान्वितं निरूपकत्वसंसर्गेण जनकत्वादावन्वेति । समवायेन ध्वंसो नास्तीत्यादावच्छेदकतानिरूपकत्वस्वरूपमवच्छिन्नत्वं तृतीयार्थस्तच्च नञर्थेऽत्यन्ताभावे स्वाश्रयप्रतियोगिताकत्वसंबन्धेनान्वेति व्युत्पत्तिवैचित्र्येण तृती-

यार्थस्य संसर्गीभूता प्रतियोगितैव प्रतियोगिनो ध्वंस-पदार्थस्य नञर्थे संसर्गीभवति अथ वा अवच्छिन्नप्रति-योगिताकत्वं तृतीयार्थः तच्च स्वरूपेण संबन्धेन नञर्थे-ऽन्वेति व्युत्पत्तिवैचित्र्येण प्रतियोगिनोऽपि संसर्गीभव-तीति वदन्ति । तृतीयार्थोऽवच्छिन्नत्वं संसर्गीभूतप्रति-योगिताविशेषणतया भासत इति स्वतन्त्राः । वस्तुतस्तु समवायेनेत्यादितृतीयान्तसमभिव्याहारः समवायाद्य-वच्छिन्नप्रतियोगिताकत्वसंसर्गेण प्रतियोगिनो ध्वंसादि-शब्दार्थस्य नञर्थान्वयबोधे हेतुरित्येव रमणीयमिति । इयमेव गतिः पटत्वेन घटो नास्ति शशीयत्वेन शृङ्गं ना-स्तीत्यादावपि बोध्या । क्वचिन्निरूपकत्वमपि तृतीया-र्थः यथा धूमस्य धूमत्वेन वह्निव्याप्तिरित्यत्र निरूपकत्वं तृतीयार्थः तच्चाधेयतया प्रकृत्यर्थविशेषितं वह्निव्याप्ताव-न्वेति निरूपकत्वं तु व्यापकान्वलक्षणं घटकत्वमिति सं-प्रदायः । अतिरिक्तमित्यन्ये । एवमङ्कुरेणानैकान्त इत्यत्र वह्न्यावयःपिण्डेन धूमव्यभिचार इत्यत्र च घटितत्वं व्या-प्यत्वलक्षणमतिरिक्तं वा निरूपकत्वं तृतीयार्थः तच्चाने-कान्तपदार्थे व्यभिचारे धूमव्यभिचारे च प्रकृत्यर्थविशेषि-तमन्वेति । क्वचिद्दैशिकसंसर्गावच्छिन्नमाधेयत्वं तृती-यार्थः यथा समेनैति विषमेणैतीत्यादौ यदीयसकलाव-यवानां प्रत्येकं स्वसंयुक्तसंयोगादिपरम्पराणामूर्ध्वदि-गवच्छिन्नानां तुल्यत्वं स भूभागः समो देशस्तदितरो विषमस्तथा च कर्तृघटितदैशिकपरम्परासंसर्गावच्छिन्न-माधेयत्वं तृतीयार्थः तच्च प्रकृत्यर्थेन समेन विषमेण च देशेन विशेषितं धात्वर्थगमनेऽन्वेति न चात्र समादि-

देशव्यापारस्य जन्यत्वेन संसर्गेण धात्वर्थगमनेऽन्वया-त्करणे तृतीयेति वाच्यं करणत्वविवक्षायामिष्टत्वात् अ-विवक्षणे तु आधारस्याधिकरणसंज्ञया तत्कार्येण वा क-रणसंज्ञायास्तत्कार्यस्य वा बाधात् करणाधारकर्मणा-मिति भाष्यात् । न चैवं तृतीयार्थाधिकरणत्वस्य धात्व-र्थेऽन्वयोपगमात् कारकत्वापत्तिरिति वाच्यं सर्वत्र धा-त्वर्थान्वयविरहात् नामार्थेनाप्यन्वयात् । अत एव शा-खया कपिसंयोगी वृक्ष इत्यत्र श्वेतः खुरविषाणाभ्या-मित्यत्र च तृतीयार्थाधेयत्वस्य शाखाविशेषितस्य कपिसं-योगे खुरविषाणविशेषितस्य श्वेतरूपे सविशेषणे हीति न्यायेनान्वयात् । रजतत्वेन पुरोवर्त्तिनं जानातीच्छति करोति द्वेष्टि वेत्यादौ प्रकारत्वं तृतीयार्थः तच्च धात्व-र्थफले द्वितीयार्थे वा विशेष्यत्वे निरूपकतासंसर्गेणान्वे-तीति वदन्ति। तत्र घट इति घटघटत्वसमवायान् जा-नातीत्यादिप्रयोगेण विशेष्यत्वस्य न धात्वर्थत्वं न वा द्वि-तीयार्थत्वं सम्भवति घट इति नियतार्थस्य धात्वर्थे-ज्ञानेऽभेदान्वयेन तादृशज्ञानविशेष्यत्वस्य घटत्वसमवाय-योरसम्भवात् विषयत्वं फलतया धात्वर्थो न तु द्वि-तीयार्थो भगवान् जानातीत्यादावनुपपत्तेरित्यस्य प्रागा-वेदितत्वात् तथा च तृतीयार्थः प्रकारत्वं रजतत्वादि-प्रकृत्यर्थविशेषितं धात्वर्थे फले विषयत्वे व्यापारे ज्ञा-नादौ वा निरूपकत्वेन प्रतियोगित्वेन वा संसर्गेणा-न्वेति रजतत्वप्रकारतानिरूपितपुरोवर्तिविशेष्यताक-त्वमाक्षेपेण परिशेषेण मनसा वा मानान्तरेणावगम्य-ते विशेष्यत्वस्य द्वितीयार्थतापक्षेऽपि तत्र तृतीयार्थप्र-

कारत्वस्य निरूपकतासंसर्गेणान्वयो न सम्भवति सुबर्थयोः परस्परान्वयस्याव्युत्पन्नत्वात् तृतीयार्थप्रकारत्वस्य धात्वर्थे ज्ञानादावेवान्वयात् प्रकारतानिरूपितविशेष्यताकत्वस्य मानान्तरादेवलाभ इति। एवं लक्षणस्वरूपप्रामाण्यादिभिरनुमाने निरूपणीये इत्यादौ शाब्दबोधस्तदनुकूलव्यापारश्च निरूपेरर्थः कर्मकृतस्तु विशेष्यो विषयो वाऽर्थः कर्मप्रत्ययस्थले व्यापारस्य विशेषणतया कर्मप्रत्ययार्थेऽन्वयः प्रकृते कर्मकृदर्थैकदेशेऽपि विशेष्यत्वे विषयत्वे वा शाब्दबोधस्य फलस्य विशेषणतयाऽन्वयो व्युत्पत्तिवैचित्र्यात् तथा चात्र तृतीयार्थप्रकारत्वस्य लक्षणादिविशेषितस्य शाब्दबोधेऽन्वयः प्रकारतानिरूपितविशेष्यताकत्वलाभः पूर्ववदेव कृदर्थैकदेशे विशेष्यत्वे विषयत्वे वा तृतीयार्थप्रकारत्वस्य निरूपकत्वेन संसर्गेणान्वय इति वदन्ति। तत्र कृदर्थैकदेशे धात्वतिरिक्तार्थस्यान्वयो न व्युत्पत्तिसिद्ध इत्यादिकं चिन्तनीयम्। केचित्तु फलविशिष्टं कर्म कृदर्थः फलस्य द्वेधा शाब्दबोधविषयत्वं तृतीयार्थप्रकारत्वस्य कर्मकृदर्थैकदेशे फलेऽन्वयस्तथा चात्र शाब्दबोधानुकूलव्यापारप्रयोज्यस्य लक्षणादिप्रकारकशाब्दबोधस्य विशेष्योऽनुमान इति शाब्दबोध इति वदन्ति। तदपि चिन्त्यं फलस्य द्वेधा शाब्दबोधविषयत्वस्याप्रामाणिकत्वात् व्युत्पत्तिवैचित्र्येणैव व्यापारविशेषणकफलविशेष्यकशाब्दबोधसम्भवेनान्वयोपपत्तिसम्भवात् फलादेः कर्मप्रत्ययार्थत्वासम्भवात् कृदर्थैकदेशे धात्वतिरिक्तार्थान्वयस्याव्युत्पन्नत्वाच्च। परिच्छिन्नत्वमपि क्वचित्तृती-

यार्थः यथा द्विद्रोणेन धान्यं क्रीणातीत्यादौ द्रोणो गुरुत्वत्वावान्तरजातिमान् परिमाणविशेषः द्विद्रोण इति पात्रादित्वान्न स्त्रीत्वं द्विद्रोणत्वमपि द्रोणत्वावान्तरजातिविशेषो द्रोणद्वित्वं वा परिच्छिन्नत्वं तृतीयार्थः क्रयकर्मत्वे धात्वर्थफले ऽन्वेति परिच्छिन्नत्वं तु द्विद्रोणस्य स्वसमवायिन एकद्रव्यस्योभयद्रव्यस्य वाऽऽरम्भकपरमाणुत्वसमनियतसंख्यासजातीयसंख्याव्यापकत्वं क्रयजनितस्वत्वस्य सकलेषु धान्यतदारम्भकेष्वेकस्याभ्युपगमात् परमाणुवृत्तित्वसम्भवेन स्वरूपेण समवायेन वा संबन्धेन तादृशसंख्यां प्रति साक्षादेव व्यापकत्वं यदि च स्वत्वस्य धान्यवृत्तित्वमुपेयते न तु तदारम्भकवृत्तित्वं तदा स्वाश्रयारम्भजननपरम्परासंबन्धेन तावत्परमाणुविश्रान्तेन व्यापकत्वं बोध्यम्। एवं द्विद्रोणसमवायिद्रव्यारम्भकपरमाणुसमनियतसंख्यासजातीयसंख्याव्यापकस्य स्वत्वस्यानुकूला क्रयक्रियेत्यन्वयबोध इति गुरुचरणाः। द्विद्रोणो गुरुत्वान्तरं समवायित्वं तृतीयार्थो धान्यपदार्थे धान्यराशावन्वेति धान्यराशेरतिरिक्तत्वात् एको महान् धान्यराशिरिति प्रतीतेरन्यथाऽवयविमानासिद्धिप्रसङ्गादित्येकदेशिनः। तच्चिन्त्यं यवधान्योभयघटितराशौ यवत्वधान्यत्वयोः स्वीकारे सांकर्यापत्तेः न च तत्र यवधान्योभयत्वजातिरतिरिक्तैव स्वीक्रियते न तु धान्यत्वं यवत्वं वेति न सांकर्यमिति वाच्यं यवाद्यर्थिनामप्रवृत्तिप्रसङ्गात् न च रुधिरास्थिमांसादीनां शरीरावयवत्ववत् यवादीनामपि तदवयवत्वाद्भवति प्रवृत्त्युपपत्तिरिति वाच्यं तथाप्यनन्तानां यवधान्योभयत्वा-

द्विजातीनां राशितत्प्रागभावध्वंसानां च कल्पनापत्तेरनतिरिक्तत्वाभ्युपगमेन प्रवृत्त्याद्युपपत्तेरेको महानिति प्रतीतिरौपाधिकीत्यन्यत्र विस्तरः। केचित्तु एकजातीयमवनमनं प्रति द्विद्रोणस्वरूपगुरुत्वविशेषस्य तदाश्रयारम्भकपरमाणुसमसंख्यकपरमाणुगुरुत्वानां च वैकल्पिकी कारणता तथा च तावत्परमाणुगुरुत्वं द्विद्रोणपदार्थः तृतीयार्थो वैशिष्ट्यं सामानाधिकरण्यं वा वैशिष्ट्यं तु स्वाश्रयारभ्यत्वघटितरपरम्परास्वरूपं धान्येषु सामानाधिकरण्यं तु दर्शितपरम्परासंबन्धावच्छिन्नं सत्त्वेऽन्वेतीति वदन्ति। तदपि न विचारसहम्। परमाणुगुरुत्वानामेवावनमनं प्रति हेतुत्वात् अवयविगुरुत्वस्य हेतुत्वे पलमितसर्षपप्रयुक्तावनमनतः तथाविधलोहपिण्डप्रयुक्तावनमनस्य प्रकर्षप्रसङ्गात् पतनप्रकर्षप्रयोजकत्वेनावयविगुरुत्वस्याभ्युपगमात् कारणोत्कर्षस्य कार्योत्कर्षप्रयोजकत्वादित्यन्यत्र विस्तरः। वस्तुतस्तु।

जालान्तरगते भानौ सूक्ष्मं यद्दृश्यते रजः।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते॥

इत्यादिना त्रसरेण्वादिघटितं माषसुवर्णनिष्कादिमानं मनुनोक्तं निष्कादिघटितं च द्रोणादिमानमेवमाढकमितद्रव्यचतुष्टयस्यारम्भकपरमाणुसमसंख्यकपरमाणुगुरुत्वानि द्रोणस्तद्द्विगुणगुरुत्वानि द्विद्रोणस्तेषां गुरुत्वानां स्वाश्रयपरमाणुभिः परम्परयाऽऽरम्भमाणत्वं संबन्धो धान्यादौ न च तावत्संख्यकाः परमाणवः परमाणुवृत्तिस्तादृशी संख्या वा द्रोणपदार्थोऽस्तु धान्यादावुभयस्य परम्परासंबन्धो भवतीति वाच्यं तावत्परमाणूनां पर-

भागासंख्यायाश्च परम्परासंबन्धस्य तैजसावयविन्यपि स-
म्भवात् तत्र द्रोणादिव्यवहारप्रसङ्गात् न च धान्यादौ
तुलितत्वस्यैवात्र व्यञ्जकस्याभावान्न द्रोणादिव्यवहार
इति वाच्यम्। चेत्रादिपूरणस्य धान्यादाविवात्रापि व्य-
ञ्जकस्य सम्भवात् तस्मात्तथाविधगुरुत्वानि द्रोणपद-
स्यार्थः यद्वशाद् द्रोणो ब्रीहिः द्रोणः पाषाण इत्युभयप्र-
तीतेरेकविषयत्वं तैर्गुरुत्वैर्दर्शितपरम्परया विशिष्टो नि-
रूढलक्षणः यद्वशात् द्रोणमाषं भुङ्क्ते भीम इति प्रयोगः न
च तैर्गुरुत्वैः संसृष्टेषु धान्येषु विशकलितेष्वपि द्रोणा-
दिव्यवहारप्रसङ्ग इति वाच्यम्। व्यञ्जकाभावादप्रस-
ङ्गात् व्यञ्जकसत्वे त्विष्टत्वात् अत एव द्रोणः का-
श्यां द्विद्रोणः प्रयागेऽयोध्यायां चेति पञ्चद्रोणो मम ब्री-
हिरिति प्रतीतिव्यवहारौ एवं तृतीयार्थोऽन्यव्यवच्छेदः
अन्यस्य द्विद्रोणव्याप्यगुरुत्वत्वावच्छिन्नप्रतियोगितासंस-
र्गेण व्यवच्छेदोऽत्यन्ताभावेऽन्वयः व्यवच्छेदस्य धान्येऽन्वयः
एवकारस्थल इव व्यवच्छेदान्वयिनि धान्ये द्विद्रोणस्याप्य-
न्वयः तत्रान्यव्यवच्छेद इव संबन्धोऽपि तृतीयार्थः द्विद्रो-
णविशेषितस्य संबन्धस्य धान्येऽन्वयात् द्विद्रोणस्यान्वयो-
बोध्य इति अतः पञ्चद्रोणेन क्रीयमाणे धान्ये द्विद्रोणेन
धान्यं क्रीणातीति न प्रयोगः न वा द्रोणेन क्रीयमाणे
द्विद्रोणेन क्रीणातीति प्रयोगः क्रीणातेस्तु फलतया प्र-
तिग्रहः व्यापारतया दानं चार्थः विक्रीणातेरपि फल-
व्यापारयोर्वैपरीत्येन तदुभयमर्थः प्रतिग्रहः स्वत्वेच्छा
दानं स्वत्वस्वत्वनाशोभयेच्छा फलस्य स्वत्वेच्छायाः प्र-
योज्यतया दाने फलस्य दानस्य प्रयोजकतया संबन्धेन

स्वत्वेच्छायामन्वयः अत एव भाविधान्यादिग्रहणार्थं- धनं प्रयुञ्जाने द्विद्रोणेन त्रिद्रोणेन वा धान्यं क्रीणात्य- यमिति प्रयोगः भाविनि स्वत्वानुपगमेऽपि स्वत्वेच्छायाः सम्भवात् एवं मूल्यस्याग्रिमकाललभ्यत्वव्यवस्थायां निष्क- शतेनाश्वं क्रीणाति इति प्रयोगः क्रये धान्यादेः कर्मणः स्वत्वप्रकारतानिरूपितविशेष्यतया स्वत्वविषयतानिरू- पिताधारत्वसंसर्गावच्छिन्नविषयतया वा संबन्धेनाव- च्छिन्नाधेयत्वे द्वितीयार्थेऽन्वयः विक्रये तु स्वत्वनाशीय- विषयताघटितान्यतरसंबन्धावच्छिन्नमाधेयत्वं द्विती- यार्थः शतेन क्रीणातीत्यत्र स्वत्वं व्यापारः करणतृती- यार्थः स्वत्वस्य जन्यत्वेन संबन्धेन स्वत्वनाशेच्छायां दा- नेऽन्वयः स्वत्वे सत्येव त्यागो भवति न हि परकीये त्याग इति स्वत्वजन्यत्वं दाने स्फुटमिति शतेन विक्रीणीत- इत्यत्र स्वत्वनाशस्तृतीयार्थस्तस्य जन्यतया स्वत्वेच्छाया- मन्वयः स्वत्वोपहितेच्छायां स्वत्वनाशस्य हेतुत्वात्पर- कीयधने तादृशेच्छाविरहादिति स्वत्वनाशः स्वत्वेच्छा- जनक इति एवं द्विद्रोणेन धान्यं स्वर्णं माषेण क्रीणा- त्ययमित्यत्र द्विद्रोणान्यद्विद्रोणव्याप्यगुरुत्वाभाववद्द्वि- द्रोणधान्यवृत्तिस्वत्वेच्छाप्रयोज्यायाः सुवर्णमाषस्वत्व- जन्यायाः स्वत्वस्वत्वनाशोभयविषयकेच्छाया आश्र- योऽयमिति शाब्दबोधः। अकर्तुर्यस्य स्वत्वनाशः ततः प- ञ्चमी ध्रुवमपाय इति सूत्रेणेति वक्ष्यते। वैपणिकान्मौ- क्तिकं क्रीणातीत्यत्र स्वत्वनाशः पञ्चम्यर्थस्तस्य जनकतया फले स्वत्वेच्छायामन्वयः फलेऽप्यपादानत्वान्वय इत्यादि- कं वक्ष्यते। एवं विक्रयकर्मणः स्वामित्वं यत्र तत्र सप्तमी

मौक्तिकं विक्रीणीते राज्ञि नागरिके वेत्यादौ "सप्तम्य-धिकरणे च" इति सूत्रेणेत्यादिकं वच्यते द्रोणपरिच्छित्ति-मुक्तासंख्यापरिच्छित्तिः काशिकावृत्तावुदाहृता पञ्चकेन पशून् क्रीणाति साहस्रेण पशून् क्रीणातीत्यादि पञ्चकं-पञ्चत्वसंख्या साहस्रं सहस्रत्वसंख्या अत्रापि अन्यव्यव-च्छेदः संबन्धश्च तृतीयार्थः पञ्चत्वस्य सहस्रत्वस्य वा व्या-प्यसंख्यात्वेनावच्छिन्नया प्रतियोगितया व्यवच्छेदेना-स्यान्वयः व्यवच्छेदस्य पञ्चत्वादिसंबन्धस्य च पशुष्व-न्वयस्तेन षट्केन त्रिकेन वा क्रीयमाणेषु पशुषु पञ्चकेन पशून् क्रीणातीति न प्रयोगः क्व चित्क्रयकरणं तृती-यार्थः यथा त्रिभिः पारावताः पञ्चेत्यादि अत्र व्यापारः क्रयस्तृतीयार्थः व्यापारस्य जन्यत्वेन क्रयस्य कर्मत्वेन संबन्धेन पारावतेष्वन्वयः। सहशब्दयोगेऽपि नानार्थिकां तृतीयां ज्ञापयति। "सह युक्तेऽप्रधाने" इति सूत्रं स-हार्थेन युक्ते तृतीया भवति सहयोगेऽप्रधानेऽप्रधानक्रि-याकारके प्रधानकारकसजातीये भवतीत्यर्थकं सहार्थः सामानाधिकरण्यं तच्च दैशिकेन कालिकेन दैशिकका-लिकोभयेन च संबन्धेन घटितत्वात् त्रिविधं वह्निना सह धूमो भस्म वेत्यत्र संयोगिसंयुक्तत्वं सहार्थः तृती-यायाः प्रतियोगित्वमर्थः आद्यसंयोगेऽन्वेति एवं वह्निप्र-तियोगिताकसंयोगवत्संयुक्तो धूम इत्यन्वयबोधः। रूपेण सह रस इत्यत्र समवायिसमवेतत्वं सहार्थः तृतीयार्थ-स्य प्रतियोगित्वस्याद्यसमवायेऽन्वयः। द्रव्यत्वेन सह धूम इत्यत्र समवायिसंयुक्तत्वं सहार्थः प्रतियोगित्वस्य समवायेऽन्वयः वह्निना सह धूमसंयोग इत्यत्र संयोगि-

समवेतत्वं सहार्थः प्रतियोगित्वं संयोगेऽन्वेति । कालि-
केन यथा जातीपुष्पेण सह नीपपुष्पमित्यत्र कालस्वरू-
पेण कालिकविशेषणतासंबन्धेनाधिकरणे तेन संबन्धेना-
धेयत्वं सहार्थः कालिकविशेषणतयाऽन्वयिप्रतियोगित्वं-
तृतीयार्थः अथ वा काल एव सहार्थः कालिकाधिकर-
णत्वस्य तृतीयार्थस्य काले कालस्य कालिकाधेयतासं-
बन्धेन नीपपुष्पेऽन्वयः । दैशिककालिकोभयेन यथा प-
त्न्या सह यजमान इत्यत्र संयोगसंयुक्तत्वं कालश्चोभयं
सहार्थः प्रतियोगित्वं कालिकाधिकरणत्वं चोभयं तृती-
यार्थः प्रतियोगित्वस्याद्यसंयोगेऽन्वयः कालिकाधिकर-
णत्वस्य काले कालस्य कालिकाधेयतया यजमानेऽन्वयः
एवं भारमनुद्वहत्सु सह गच्छत्सु पुत्रेषु सहैव दशभिः
पुत्रैर्भारं वहति गर्दभीत्यत्रापि दर्शितोभयं सहार्थः तृ-
तीयार्थोऽपि प्रतियोगित्वकालिकाधिकरणत्वोभयमेव पू-
र्ववदन्वयो बोध्यः । सहयोगे काशिकायामुदाहरणानि ।
यथा पुत्रेण सह स्थूल इत्यत्र स्थूलत्वं तृतीयार्थः तत्र पु-
त्रस्याधेयतयाऽन्वयस्तृतीयार्थस्य स्थूलत्वस्य कालिका-
धिकरणतया सहार्थे काले कालस्याधेयतया पदार्थैकदेशे
स्थूलत्वेऽन्वयः एवं पुत्रस्थूलत्वसमानकालिकस्थूलत्ववान्
पितेत्यन्वयबोधः पुत्रेण सह गोमान् पितेत्यत्र स्वामि-
त्वं तृतीयार्थः तस्य निरूपकतासंबन्धावच्छिन्नसामाना-
धिकरण्ये सहार्थे प्रतियोगितयाऽन्वयः सहार्थस्य मतुब-
र्थैकदेशे गोविशेषिते स्वामित्वेऽन्वयः एवं पुत्रस्वामित्व-
समानाधिकरणगोस्वामित्ववान् पितेत्यन्वयबोधः अ-
प्रधानेऽश्रेष्ठे वस्तुभूते प्रकृत्यर्थे सतीत्यर्थः तेनाचार्येण स-

इति न प्रमाणं प्रमाणं च शिष्येण सहाचार्यस्य गौः अत्र तृतीयार्थः स्वत्वं सहार्थः सामानाधिकरण्यं षष्ठ्यर्थः स्वत्वं तृतीयार्थस्य सहार्थे तस्य च षष्ठ्यर्थे तस्य गव्यन्वयः एवं शिष्यस्वत्वसमानाधिकरणाचार्यस्वत्ववती गौरित्यन्वयबोधः क्व चित्संबन्धमात्रं तृतीयार्थः यथा वज्रेण सहेन्द्र इत्यत्र संयोगः सहार्थः प्रतियोगित्वं तृतीयार्थः एवं वज्रप्रतियोगिताकसंयोगवानिन्द्र इत्यन्वयबोधः गन्धेन सह पृथिवीत्यत्र सहार्थः समवायः शेषं पूर्ववत् । एवं दक्षिणाभिः सहैत्यहमित्यत्र सहार्थः संबन्ध इति नापरामृष्टे यज्ञे दक्षिणाप्रतियोगिताकोऽन्वेति यज्ञस्याहंपदार्थे प्रयोक्तरि भगवति तादात्म्यान्वयः दक्षिणाया यज्ञे संबन्धस्तु विहितकालिकस्वविषयकत्यागप्रयोज्यप्रतिष्ठावत्त्वं प्रतिष्ठा तु फलजनकत्वमिति एवं मुद्रया सह कुण्डली देवदत्त इत्यत्र तृतीयार्थः संबन्धः स चात्र संयोगः सहार्थः समानकालिकत्वं तच्च काल एव तस्य इन्प्रत्ययार्थैकदेशे संबन्धेऽन्वयः इत्थं मुद्रासंयोगसमानकालिककुण्डलसंयोगवान् देवदत्त इत्यन्वयबोधः यदि च तिङर्थविशेषणत्वार्थस्येव तद्धितार्थविशेषणतदर्थतावच्छेदकसंबन्धादेः पुत्रेण सह स्थूलः पितेत्यादौ नामार्थतावच्छेदकस्य विशेषणस्य स्थूलत्वादेः सहार्थे विशेष्यतया विशेषणतया वाऽन्वयोऽभ्युपेयते तदा तृतीयायाः संबन्धान्वयि स्थूलत्वान्वयि चाधेयत्वमर्थः तृतीयान्तार्थविशेषितयोः संबन्धस्थूलत्वयोः सहार्थे विशेषणत्वमिति । ननु सहपदस्य तृतीयायाश्चार्थस्य पदार्थैकदेशेऽन्वयो न युज्यतेऽव्युत्पत्तेः किं तु पुत्रेण सह स्थूलः

पिता, कन्यया सह रमणीयो वर इत्यत्र पदार्थयोः स्थू-
लरमणीययोस्तादात्म्येन पितृवरान्वयिनोः सहार्थे वि-
शेषणतया विशेष्यतया वाऽन्वयः विशेषणत्वापन्नयोस्तयो-
स्तृतीयार्थोऽभेदोऽन्वेति एवं पुत्राभिन्नस्थूलसमानकालि-
कस्थूलः पितेति कन्याभिन्नरमणीयसमानकालिकरम-
णीयो वर इति चान्वयबोधो भवति स्थूलयो रमणीय-
योश्च समानकालिकत्वे भासमाने स्थूलत्वयो रमणीय-
त्वयोश्च समानकालिकत्वं भासते विशिष्टान्वयबोधसा-
मग्रीबलादिति चेत् एवमन्वयोपगमेऽपि नाभिमतनिर्वा-
हः सहार्थविशेषणतावच्छेदकयोः स्थूलत्वरमणीयत्व-
योः समानकालिकत्वभानायोगात् विशिष्टान्वयस्थले
हि यद्धर्मविशिष्टे विशेषणस्यान्वयस्तत्र विशेष्येऽबाधेऽबा-
धेपि वा सति तद्धर्मविशेषणस्यान्वयो भवति यथा शि-
खी विनष्ट इत्यत्र विनष्टतादात्म्यं शिखायां यथा वा भू-
वादिर्धातुरित्यत्र तादात्म्यं भुव्यप्यन्वेति न तु विशेषण-
तावच्छेदके विशेष्यस्य क्वाप्यन्वयः व्युत्पत्तिविरहात् न च
मास्तु विशेषणतावच्छेदके स्थूलत्वे समानकालिकत्वा-
न्वय इति वाच्यम् । तथा सति कालान्तरेण स्थूलेऽपि
पुत्रे तथाविधप्रयोगप्रसङ्गात् यदपि सहार्थतृतीयार्थयोरे-
कदेशान्वयो न व्युत्पन्न इति। तदपि न सुन्दरम्। एकदे-
शान्वयस्यावश्यकत्वात् तथा हि पुत्रेण सह गोमान्
पितेत्यत्र पुत्राभिन्नगोमतः समानकालिकत्वं गोमति
भासते चेत्तर्हि पुत्रस्य गवान्तरस्वामित्वेऽपि तथा प्रयोग-
प्रसङ्गः दर्शितान्वयस्य तावतापि सम्भवात् तस्मात्सहा-
र्थविशेषणत्वापन्ने मतुबर्थतावच्छेदके स्वामित्वेऽन्वयिता-

वच्छेदके गोस्वामित्वे चैकदेशे तृतीयार्थाधेयत्वस्यान्वयः । गोस्वामित्वे एकदेशे सहार्थस्य विशेषणतयाऽन्वयः सहार्थः निरूपकतासंबन्धघटितसामानाधिकरण्यं प्रतियोगित्वसंबन्धेन स्वामित्वस्य सामानाधिकरण्ये तस्य स्वरूपेण गोस्वामित्वेऽन्वयितावच्छेदके तद्विशिष्टस्य तादात्म्येन पितर्यन्वयः न चात्र भवत्वेकदेशान्वयस्तावता सर्वत्र न तत्सम्भवः पुत्रेण सह स्थूल इत्यत्र,पुत्राभिन्नस्य स्थूलत्वविशिष्टस्य समानकालिकत्वे विशेषणतयाऽन्वयात् स्थूलत्वस्याप्यन्वयः विशेषणान्वये सत्येव विशिष्टान्वयस्य भावादित्येतावता सामञ्जस्यान्नात्रैकदेशान्वयइति वाच्यं यत्र हि स्थूलत्वोपलक्षितः स्थूलपदेन प्रतिपादितस्तत्र विशिष्टान्वयबलादपि न स्थूलत्वसमानकालिकत्वलाभ इत्येकदेशान्वय आवश्यक इति । एवं शिष्यैः सह जटावन्तो मुनयः, यज्ञदत्तगृहैः सह काकवन्तो देवदत्तगृहा इत्यादावेकदेशान्वयं विना नाभिमतनिर्वाह इति एवं सह दिवसनिशाभ्यां दीर्घाः श्वासदण्डा इत्यत्र दीर्घत्वं कालिकं दैशिकं च बहुतरकालसंबन्धः कालिकं यद्वशाद्दीर्घमायुरिति प्रयोगः बहुतरदेशसंबन्धो दैशिकं यद्वशाद् दीर्घः पन्था इति प्रयोगः दीर्घत्वं स्वजातीयापेक्षया बोध्यं दिवसो ग्रीष्मे दीर्घः निशा हेमन्ते दीर्घा विरहिश्वासो बहुतरवायुमण्डलगामितया दीर्घः एवं दीर्घपदोपस्थापितयोः दीर्घत्वयोः कालिके तृतीयार्थाधेयत्वस्य दैशिके विशेष्यतया श्वासस्यान्वयो योग्यताबलात्सहार्थः एवं दिवसरात्र्योर्वा बहुतरकालसंबन्धस्य समानकालिको यो बहुतरदेशसंबन्धस्तद्-

तः श्वासदण्डा इत्यन्वयबोधः। अत्र दण्डस्य घटिकाया दिवसदीर्घत्वसमानकालिकं दीर्घत्वं विरुद्धमिति दण्डस्य चतुर्हस्तदेशसम्बन्धवतः दिवसचटकक्षणसमसंख्यकपरमाणुसम्बन्धरूपं दीर्घत्वं विरुद्धमिति विरोधालङ्कारः। एकानुपूर्वीकशब्दप्रतिपाद्ययोर्भिन्नयोरर्थयोरपि सहार्थे विशेषणतया विशेष्यतया चान्वयः। यथा

दोषायोगमहस्थितिस्फुटरसश्रीकायहृद्यः समं।
चन्द्रेणैष नृपो बुधोदयगुरुप्रीतः कविः प्रीतिमान्॥
पुत्रोऽस्यापि समं बुधेन सततं मित्रान्तिकामोदनः।
प्रीतः प्राप्तकराहुतोदयगुणोऽत्युच्चः श्रितः सौम्यताम्॥

अत्र रात्रियोगेन या तेजःस्थितिस्तत्र स्फुटरसा या श्रीः तद्वता कायेन हृद्यत्वमेकं दोषराहित्येनात्मवत्स्थित्या च स्फुटा रसा पृथिवी यत्रेदृशलक्ष्मीको योऽयः शुभावहो विधिस्तेन हृद्यत्वमपरमेवं दलान्तरेऽप्यर्थद्वयं बोध्यमिति। दर्शितयोर्हृद्यत्वयोः सहार्थे समानकालिकत्वे विशेषणविशेष्यभावेनान्वयः तत्र विशेषणे हृद्यत्वे तृतीयान्तार्थस्य चन्द्राधेयत्वस्यान्वयः विशेष्यहृद्यत्वस्य विशेषणतया नृपेऽन्वय इति पुत्रेण सहागत आगच्छति वेत्यादौ कर्तृत्वं कारकं क्तप्रत्ययार्थतावच्छेदकमाख्यातस्य वा शक्यं तृतीयाऽभिधत्ते धात्वर्थ आगमनं कालिकत्वे विशेषणतया विशेष्यतया चान्वेति विशेषणे धात्वर्थे तृतीयार्थकारकस्यान्वयः विशेष्यधात्वर्थस्य क्तदर्थैकदेशे तिङर्थे वा कर्तृत्वे विशेषणतयाऽन्वयः। एवं पुत्रकर्तृताकागमनसमानकालिकातीतागमनकृतिमदभिन्नः तथाविधविद्यमानागमनकृतिमान्वा पितेत्यन्वयबोधः

प्रधानेऽतीतत्वान्वितेऽतीतायां विद्यमानत्वान्विते विद्यमानायां गुणक्रियायाः समानकालिकत्वं भासत इति न काऽप्यनुपपत्तिः। प्रधानक्रियाकारकसजातीयं कारकं तृतीयार्थः कर्तृत्वादिकं तत्र कर्तृत्वमुदाहृतमन्यदुदाह्रियते कर्मत्वं यथा हिरण्येन सह गां लभते इत्यत्र लभतेः स्वत्वं व्यापारश्चार्थः द्वितीयातृतीययोराधेयत्वं कर्मत्वमर्थः सहार्थः समानकालिकत्वमेवं हिरण्यवृत्तिस्वत्वानुकूलव्यापारसमकालिकगोवृत्तिस्वत्वानुकूलव्यापाराश्रयत्वं वाक्यार्थः। करणत्वं यथा तृणेन सह काष्ठेन पचतीत्यत्र तृतीययोः करणत्वमर्थः तथा च तृणकरणताकपाकसमकालिककाष्ठकरणताकपाककृतिर्वाक्यार्थः। ऋत्विग्भिः सह गुरवे ददातीत्यत्र चतुर्थीतृतीययोः संप्रदानत्वमर्थः तथा च ऋत्विक्संप्रदानताकदानसमकालिकगुरुसंप्रदानताकदानाश्रयत्वं वाक्यार्थः। कोटरेण सह तरोः पततीत्यत्र कोटरापादानताकपतनसमकालिकतर्वपादानताकपतनकृतिर्वाक्यार्थः। सपत्नीभिः सह कान्तस्य वसतीत्यत्र सपत्नीसंबन्धिवाससमकालिककान्तसंबन्धिवासाश्रयत्वं वाक्यार्थः। पीठेन सह गृहे आस्ते इत्यत्र पीठाधिकरणताकासनसमकालिकगृहाधिकरणताकासनाश्रयत्वं वाक्यार्थः। सहार्थविशेषणविशेष्ययोः धात्वर्थयोरुभयोस्तृतीयाभिन्नविभक्त्यन्तार्थः सर्वोऽन्वेति तृतीयान्तार्थो विशेषणे तेन पुत्रस्य ग्रामगमने पितुर्नगरगमने पुत्रेण सह नगरं गच्छति पितेति न प्रयोगः। तत्र कर्मत्वादिकारकस्य तृतीयार्थस्य गुणक्रियायामन्वयो न कर्तृत्वस्य तत्र प्रधानक्रियाकर्तुरेव

कर्तृत्वमवमीयते गुणक्रियाकारकानभिधाने प्रधानकारकस्य प्रत्ययाभिहितस्य गुणक्रियायामन्वयात् । तदुक्तम् ।

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
गुणे यदा तदा तद्वदनुक्ताऽपि प्रतीयते ॥

इति हिरण्येन सह गां लभत इत्यादौ गोलब्धृकार्त्तृकत्वं हिरण्यलाभे प्रतीयते अतो न चैत्रेण हिरण्ये मैत्रेण गवि लभ्यमानायां हिरण्येन सह गां लभते मैत्र इति प्रयोगः अत एव समानकर्तृकत्वादिकं सहार्थ इति निरस्तम् । दर्शितरीत्याऽतिप्रसङ्गनिराशात् समानकर्तृकत्वादौ च शक्त्यन्तरकल्पनाया अन्याय्यत्वाच्च पत्न्या सह यजत इत्यत्र पतिपदस्याध्याहारे पत्नीसाहित्यं पत्युर्विशेषणं यदि च नाध्याहारस्तदाऽपि साहित्यद्वारकं कर्तृत्वं पत्न्या मन्तव्यं पत्नीसाहित्यस्य गौचनदविकारत्वात् यत्कर्त्तव्यं तदनया सहेत्यभिधानात् । अत्रापि पत्येत्यध्याहारः । यदि च नाध्याहारस्तदाऽपि कर्तव्यत्वे कृतिविषयत्वे धात्वर्थकृतौ साहित्यद्वारकं कर्तृत्वं पत्न्या इति एवमन्वयबोधोपपादनेऽपि पत्येत्यध्याहारं विना मुख्यकर्तव्यताकाङ्क्षाया अनिवृत्तिः । भाट्टानां मते कर्तृत्वादिकमखण्डमतिरिक्तमिति पत्न्या अपि कर्तृत्वं निराबाधमिति । केचित्तु पुत्रेण सहागत आगच्छति वेत्यादौ आगमनसमानकालिकागमनेन कर्तृतासंबन्धेन विशिष्टस्तथाविधागमनं च सहशब्दस्यार्थः विशिष्टस्य तादात्म्येन तथाविधागमनस्य कर्तृतया संब-

न्वेन प्रथमान्तार्थे पितर्यन्वयस्तत्रैवागतशब्दार्थस्यागमन-
कर्तुरभेदेनागच्छतीति तिङन्तार्थं आगमनकर्तृत्वस्य यथा
योगमन्वयः। न चैवं सहशब्दार्थान्वयादेवागमनलाभे आ-
गत आगच्छतीतिशब्दप्रयोगो व्यर्थ इति वाच्यम्। तत्त-
त्प्रत्ययान्तधातुसमभिव्याहारेणैव सहशब्दस्य क्रियातद्वि-
शिष्टोपस्थापकत्वात्। एवं तृतीयार्थः कर्तृत्वं समानका-
लिकत्वविशेषणीभूतधात्वर्थे सहार्थैकदेशेऽन्वेति सहशब्दस्य
निपातत्वात्तदर्थस्य भेदान्वयो नामार्थेऽपि न विरुद्धः न
च यशसा सह मूर्च्छतीह शत्रुरित्यत्र तिङन्तेन मोहक-
र्तृत्वस्योपस्थापनात् सहशब्देन मोहसमानकालिकमो-
हाभिधाने मोहे यशःकर्तृकत्वबाधादन्वयानुपपत्तिरि-
ति वाच्यम्। तिङर्थान्वितमोहोपस्थितावपि मूर्च्छतियोगे
सहशब्दो हि पुत्रैः सह मूर्च्छति शत्रुरित्यत्र मोहसमा-
नकालिकमोहः यशसा सह मूर्च्छति श्रीरित्यत्र वृद्धिस-
मानकालिकवृद्धिः रिपुणा सह मूर्च्छति यश इत्यत्र मो-
हसमानकालिकवृद्धिः प्रकृते वृद्धिसमानकालिकमोह
एते सहार्थास्तथा च सहार्थैकदेशे वृद्धौ यशःकर्तृकत्व-
स्याबाधनात् नान्वयानुपपत्तिरिति वदन्ति। तन्न विचा-
रसहम्। सहशब्दस्य समानकालिकत्वशक्त्यैव निर्वाहे
धातुभेदेन तदर्थभेदेन तत्तत्प्रत्ययभेदेनानन्तशक्तिकल्पना-
या अन्याय्यत्वात् यत्र धातोर्नानार्थस्तत्र समानकालिक-
त्वे विशेषणतया विशेष्यतया चान्वये योग्यता तन्त्रमि-
ति वक्ष्यते। यत्र च न नानार्थः शब्दः तृतीयाभिन्नप्र-
कृतिस्तत्र तृतीयार्थभिन्नकारकान्विता नामार्थव्यक्तिरेव
कारकद्वारा क्रियान्वयिनी तेन पितरि नन्दिग्रामं ग-

च्छति ग्रामान्तरं च पुत्रे पुत्रेण सह ग्रामं गच्छतीति न प्रयोगः अत एव पुत्रेण सह गां लभत इत्यत्र एकस्या-मेव गवि पितुः पुत्रस्य च स्वत्वं प्रतीयते एवं हिरण्येन सह गां पुत्रेण सह लभते पितेत्यत्र सहार्थद्वयस्याद्वंबोधः तत्र हिरण्यकर्मकलाभसमानकालिकगोकर्मकलाभः द्वि-तीयसहार्थे विशेषणतया विशेष्यतया वाऽन्वेति तत्र पुत्रकर्तृकत्वं हिरण्यलाभे प्रथमसहार्थस्य विशेषणे वि-शेष्ये गोलाभे चाऽन्वेति द्वितीयसहार्थस्य विशेष्ये गोला-भे विशेष्यतावच्छेदकांशे हिरण्यलाभे च पितृकर्तृताक-त्वमन्वेति व्युत्पत्तिवैचित्र्यात्। ननु हिरण्येन सहेत्यत्र सहार्थकर्मत्वं तदन्वयिनिरूपितत्वं तृतीयाऽर्थः पुत्रेण स-हेत्यत्र सहार्थः कर्तृत्वं तच्चाधेयत्वं तदन्वयिनिरूपितत्व-मेव तृतीयाऽर्थः सूत्रेणापि कर्मत्वकर्तृत्वादियोगे तृती-याऽनुशिष्यते अप्रधाने इति प्रकृत्यर्थस्य तथात्वं सूचयति एवं लाभे हिरण्यकर्मत्वगोकर्मत्वपुत्रकर्तृत्वानामन्वयः तथा च पुत्रकर्तृताकहिरण्यकर्मताकगोकर्मताकलाभक-र्ता पितेति शाब्दबोधः एतावता सर्वसामञ्जस्ये सहस्य स-मान कालिकत्वादौ शक्तिर्न कल्प्यते मानाभावात् न वा धात्वर्थस्य सहार्थे विशेषणतया विशेष्यतया चान्वयः व्यु-त्पत्त्यन्तरकल्पनागौरवादिति चेन्न सहस्य कर्मत्वादिश-क्तिकल्पनायां क्लेशेण सहोपानहौ दधातीत्यत्रैकस्यां धारणक्रियायामुपानच्छत्रयोः कर्मत्वासम्भवेनानन्वया-पत्तेः पुत्रेण सहागच्छतीत्यत्र पितापुत्रकर्तृत्वयोरेकत्वा-सम्भवेनानन्वयापत्तेश्च तस्मात्सहस्य समानकालिकत्वशक्तेः क्लृप्ततया व्युत्पत्त्यन्तरकल्पनं न न्याय्यं न च क्व समान-

कालिकत्वे शक्तिः क्लृप्तेति वाच्यम् । गर्जितेन सह वृष्टिः श्यामाकमञ्जरीभिः सह कङ्गुमञ्जरीत्यत्र सहस्य समानकालिकत्वार्थत्वं विनाऽन्वयस्य दुरुपपादत्वादिति एवं यत्र भिन्नकर्तृकयोः क्रिययोरेकव्यक्तिकर्मकत्वं न सम्भवति योग्यताविरहात् तत्रैकरूपेण नानाव्यक्तीनां कर्मत्वं यथा पुत्रेण सहौदनं भुङ्क्ते इत्यत्र पुत्रकर्तृकपितृकर्तृकयोर्भोजनयोरेकौदनव्यक्तिकर्मकत्वं न सम्भवति ओदनत्वेन नानौदनानामेव तत्र कर्मत्वमिति भिन्नरूपेण नानारूपकर्मत्वसंभवेऽपि पृथक् पुत्रे ओदनं पितरि भुञ्जाने पुत्रेण सह पृथगोदनं तदुभयं वा भुङ्क्ते इति न प्रयोगः इत्येकरूपेणेत्युक्तम् । एवं पुत्रेण सह भुङ्क्ते इत्यत्र सहार्थः समानकालिकत्वं सामानाधिकरण्यस्वरूपं समानदेशत्वं चोभयस्मिन्नेव सहार्थे भोजनस्य विशेषणतया विशेष्यतया चान्वयः विशेषणे भोजने पुत्रकर्तृकस्यान्वयस्तेन विभिन्ने काले देशे च कालान्तरेणैकगृहे एककाले गृहान्तरे च भोक्तरि पुत्रे पितरि वा न तथा प्रयोगः । एवं पतितैः सह न भुञ्जीतेत्यत्र यद्येककालावच्छेदेनैकगृहे पतितापतितयोर्भोजने पतितभोजनमपतितं न दूषयति तदैकपावैकपङ्क्त्यधिकरणकत्वरूपं समानदेशत्वं प्रकृते बोध्यमिति पङ्क्तिस्तु परत्वविशेषापरत्वविशेषनिरूपकसजातीयाधिकरणं देशः संयोगघटितः परम्परया घटकेन स्वल्पेन स्वल्पतमेन संयोगेनाभिव्यङ्ग्यपरत्वविशेषोऽपरत्वविशेषः यदि च पुरुषाकृतिकाष्ठनिवेशेऽपि पङ्क्तिव्यवहारस्तदा साजात्यं समानाकारतया बोध्यमिति एवं पुत्रेण

सह पचतीत्यत्रापि समानदेशत्वं समानकालिकत्वं च सहार्थस्तेन देशकालयोर्वैपरीत्ये न तथाप्रयोगः। सूपेन सहौदनं पुत्रेण सह पचति पितेत्यत्र द्वेधा सहार्थान्वयस्तेन पुत्रकर्तृकसूपकर्मताकपाकसमानदेशकालिकौदनकर्मताकपाकसमानदेशकालिकसूदकर्मताकपाकसमानदेशकालिकौदनकर्मताकपाककृतिमान् पितेत्यन्वयबोधः। ननु "प्रासोष्ट शत्रुघ्नमुदारचेष्टमेका सुमित्रा सह लक्ष्मणेने"त्यत्र लक्ष्मणप्रसवसमानकालिकत्वं शत्रुघ्नप्रसवे बाधितमिति कथं सहार्थान्वयः न चात्र स्थूलकालप्रथमजातो लक्ष्मणादिरेव ग्राह्य इति न समानकालिकत्वान्वयानुपपत्तिरिति वाच्यम्। तथासति "प्रासोष्ट बीभत्समुदारचेष्टमेका पृथा वायुसुतेन साक"मित्यादिप्रयोगप्रसङ्गात्। प्रथमजातभीमादिस्वरूपकालमादाय समानकालिकत्वान्वयसम्भवादिति चेत् प्रकारान्तरेणात्र समानकालिकत्वसम्भवस्तथा हि सूतिमारुतोऽत्र कालो बोध्यः एक एव सूतिमारुतोऽयमजप्रसवहेतुः सूतिमारुतस्य प्रसवप्रयोजकत्वमुक्तं याज्ञवल्क्येन।

नवमे दशमे मासि प्रबलैः सूतिमारुतैः।
निःसार्य्यते बाण इव यन्त्रच्छिद्रेण स ज्वरः॥

इति न च बहुवचनेन भूयसां सूतिमारुतानां प्रसवप्रयोजकत्वमुक्तं कथमेकसूतिमारुतः कालत्वेनोपादीयत इति वाच्यम्। एककालवर्त्तितया हि मारुतानामेकत्वमिष्यते य एव सूतिमारुता लक्ष्मणप्रसवे त एव शत्रुघ्नप्रसवे प्रयोजका न तु भिन्नाः कल्पनागौरवात् लक्ष्मणनिर्गमकाले लक्ष्मणस्य प्रतिबन्धकतया न शत्रुघ्न-

निर्गमः यथा एकेन पुरुषव्यापारेण कमलपत्राणां सू- चिभेदने प्रथमपत्रभेदनकाले न द्वितीयपत्रभेदनं प्रथ- मपत्रस्य प्रतिबन्धकत्वादिति जरायुजशरीरस्य शरी- रान्तरेऽन्तरवयवावच्छेदेन यः संयोगस्तत्प्रतिद्वन्द्वी वि- भागो व्यापारस्य षूङोऽर्थः प्रतिद्वन्द्वित्वं तु नाशकताव- च्छेदकवैजात्यं सूतिमारुतसंयोगजक्रियाविशेषजन्यता- वच्छेदकतया सिद्धं तद्वैजात्यवान् विभागः फलविषयाऽ- र्थस्तेन जरायुजशरीरस्य धातुनाऽनभिधानात्षूङो न स- कर्मकत्वहानिः वैजात्यपरिचयार्थं जरायुजशरीरादिक- थनं तेन व्याघ्रिवशाद्भेदकादिप्रसवे प्रसूत इति प्रयोग- वारणाय जरायुजशरीरोपादानं बालस्य क्रोडात् क्रो- डान्तरगमने प्रसूत इति प्रयोगवारणाय शरीरेऽन्तरवय- वावच्छेदेनेत्युक्तं तरुः फलानि सूते वसुधा भटान् सूते सहस्रपात् शनिं प्रासूतेत्यादौ षूङ उत्पत्तिस्तदनुकूल- व्यापारश्चार्थ इति तदुपपत्तिः एवं प्रकृते लक्ष्मणवृत्ति- विजातीयविभागानुकूलव्यापाराधिकरणसूतिमारुतका- लिकस्यातीतस्य शत्रुघ्नवृत्तिविजातीयविभागानुकूलव्या- पारस्याश्रयः सुमित्रेत्यन्वयबोधः। वैशम्पायनेन सह वेदं जैमिनिरधीत इत्यत्राधीङोऽर्थद्वयमुच्चारणं तदनु- कूलश्रावणं चेत्येकोऽर्थः उच्चारणं तु वर्णोत्पत्त्यनुकूलत- योपलक्षितो विवृतादिः प्रयत्नः स तु विवृतत्वादिनैव धात्वर्थे निविशतेऽतो न सकर्मकत्वहानिः लिप्यादिना वर्णज्ञानादुच्चारणेऽधीत इति प्रयोगवारणाय श्रावण- मुक्तं श्रावणस्य फलज्ञानविषया विवृतादिप्रयोजकत्वं वर्णस्य फलस्य साधनतया कण्ठताल्वादिसंयोगि तत्ता-

धनतया कण्ठादिक्रियायामिच्छा विहितादिप्रयत्नश्चेतीयं रीतिर्वर्णोत्पादे बोध्या अधीङो धातोरीदृशार्थत्वशास्त्र-योगो यथा पञ्चाब्दिको ब्रह्मबटुर्वेदमधीत इत्यत्रानुपू-र्वीविशेषविशिष्टा वर्णकलापो वेदः द्वितीयार्थः साध्य-त्वाख्यं विषयत्वं साध्यत्वविषयत्वसंबन्धावच्छिन्नमाधे-यत्वं वा विहितावन्वेति एवं वेदविषयताकस्य वेदाधे-यस्य वा विहितादेरनुकूलश्रावणाश्रय. पञ्चाब्दिको ब्रह्म-बटुरित्यन्वयबोधः । एवमुपाध्यायप्रतिवशो बालो वा शुको वाऽधीत इति प्रयोगः सूपपादः । अर्थप्रतिपाद-कत्वेन ज्ञानं प्रतिपादकतासंबन्धेनार्थवत्तया ज्ञानं वा फलं तदनुकूलश्रावणं चेत्यपरोऽधीङोर्थः भवति हि वि-वरणवाक्यश्रवणानन्तरं विव्रियमाणवाक्ये विवरणार्थक-त्वबुद्धिः सा शाब्दबोधः ज्ञानसामान्यं वा शाब्दबोध-पक्षे इति शून्यवाक्ये पचति पाकं करोतीत्यादौ पच-तीत्यत्र तिङः पचतिपदमर्थः धातुप्रयोगः साधुत्वार्थः प्रणयेदितिवत् विवरणवाक्यस्य पाककृतिरर्थः प्रतिपा-दकतासंसर्गेण पचतिपदेऽन्वेति यच्च चेतिसहितं वाक्यं पचतीति पाकं करोतीत्यर्थं इत्यादावित्युपस्थापितस्य प-चतिपदस्य पाककृतेरित्युपस्थापितायास्तादात्म्येनान्वि-तेऽर्थपदार्थे प्रतिपाद्यतासंसर्गेणान्वयः एवमर्थे शब्दप्र-तिपाद्यताग्रहकाले शब्देऽप्यर्थप्रतिपादकत्वं गृह्यते ज्ञान-सामान्यपक्षे तु शाब्दानन्तरं प्रतिपादकत्वमानसमन्ब-वान्नानुपपत्तिरिति । अर्थवत्तायाः शाब्दबोधस्यानुकू-लत्वं च पदार्थस्मृतिद्वारा ज्ञानसामान्यस्यानुकूलत्वं स्मृ-तिशाब्दादिद्वारा श्रावणस्येति । एवं शास्त्रमधीत इत्यत्र

द्वितीयाया विशेष्यत्वं तत्संबन्धावच्छिन्नमाधेयत्वं वाऽर्थः शाब्दबुद्ध्यर्थवत्त्वप्रकारकज्ञानानुकूलशाब्दाश्रयत्वं वाक्यार्थः वेदमधीते जैमिनिरित्यत्र द्विविधाध्ययनं धात्वर्थः वेदकर्मकाध्ययनाश्रयो जैमिनिरिति वाक्यार्थबोधः एवं द्विविधाध्ययने श्रावणान्वयव्याख्यानमुपयोगः पञ्चम्यर्थ इति ज्ञापयति "आख्यातोपयोगे" इति सूत्रमित्यादिकं वक्ष्यते । व्यासाद्वेदमधीत इत्यत्र पञ्चम्यर्थो वाक्यं व्यासविशेषितं श्रावणेऽन्वेति सहाधीत इत्यत्र समानगुरुकत्वमपि सहार्थः तच्च सजातीयवाक्यविषयकत्वं साजात्यं च पुरुषप्रयोज्यतावच्छेदिकया कत्वादिव्याप्यजात्या बोध्यं तेन गुरुभेदेनैककाले एकवेदाध्ययने तथा न प्रयोगः एवं प्रदर्शितस्थले वैशम्पायनकर्तृताकस्य वेदविषयकविद्दताद्यनुकूलस्य वेदविषयकार्थवत्त्वप्रकारकज्ञानानुकूलस्य वा श्रावणस्य समानकालिकं विषयसजातीयवाक्यविषयकं च यद् वेदविषयकविद्दताद्यनुकूलं वेदविषयकार्थवत्त्वप्रकारकज्ञानानुकूलं वा श्रावणं तदाश्रयो जैमिनिरित्यन्वयबोधः । "आहारो हि मनुष्याणां जन्मना सह जायते" इत्यत्र कर्तृघटितं सामानाधिकरण्यं सहार्थः क्रिययोरन्वेति गर्भाशयविभागस्तदनुकूलव्यापारो वा जन्मशब्दार्थः पार्थिवद्रव्यप्रतियोगिककण्ठसंयोगस्तदनुकूलव्यापारो वाऽऽहारशब्दार्थः जन्माहारयोः कर्त्रैकशरीरवर्तित्वाद्वर्तिक्रिययोः सामानाधिकरण्यं तथा च जन्मकर्तृताकोत्पत्तिसमानाधिकरणोत्पत्त्याश्रय आहार इत्यन्वयबोधः जनिधातोरुत्पत्तिरर्थ इति न चात्र समानकालिकत्वं सहार्थ इति वाच्यम् । अनन्वया-

पत्तेः जन्मोत्पत्तेरनन्तरमेवाहारोत्पत्तेः सम्भवात् न चोत्तरकालिकत्वं सहार्थोऽस्त्विति वाच्यं तथासति पुत्रागमनोत्तरमागते पितरि पुत्रेण सहागत इति प्रयोगापत्तेः सामानाधिकरण्यस्य सहार्थत्वे तु यत्र क्रिययोः सामानाधिकरण्यं तत्र सहप्रयोग इष्ट एव एवं सहार्थे एकानुपूर्वीकतिङन्तप्रतिपाद्यो नानाविधो धात्वर्थो विशेषणतया विशेष्यतया चान्वेति विशेषणे तृतीयान्तार्थस्य यथा यशसा सह मूर्च्छतीह शत्रुरित्यत्र मोह उच्छ्रायस्य धातोरर्थः यशःकर्तृताकत्वमुच्छ्राये तत् समानकालिकत्वे तन्मोहे स तिङर्थे आश्रयत्वे तच्छत्रौ विशेषणतया ऽन्वेति योग्यताबलात् व्युत्पत्तिवैचित्र्याच्च । यशःकर्तृकसमुच्छ्रायसमानकालिकमोहाश्रयः शत्रुरित्यन्वयबोधः । नानाविधेऽपि धात्वर्थे एकानुपूर्वीकशब्दप्रतिपाद्यो नानाविधोऽर्थस्तृतीयाभिन्नविभक्त्यर्थोऽन्वेति तत्र योग्यतावशात् एकविधार्थान्वितो विभक्त्यर्थो विशेषणेऽपरविधार्थान्वितो विशेष्ये धात्वर्थेऽन्वेति व्युत्पत्तिवैचित्र्यात् यथा"कैरवं हतवान् राजा भृङ्गेण सह सत्वरमि"त्यत्र धात्वर्थौ गमनं हननं च कैरवशब्दार्थः कुमुदं शत्रुश्च कुमुदकर्मत्वं गमने शत्रुकर्मत्वं हननेऽन्वेति एवं भृङ्गकर्तृताककुमुदकर्मताकगमनसमानकालिकशत्रुकर्मताकहननाश्रयो राजेत्यन्वयबोधः । तथाविधनानाविधार्थान्वितस्तृतीयाभिन्नविभक्त्यर्थः एकविधार्थान्वितः सहार्थस्य विशेषणेऽपरविधार्थान्वितो विशेष्ये एकविधेऽपि धात्वर्थेऽन्वेति यथा"देवाधिनाथेन सह चितीशो भृशं धराप्रीतिमसौ बिभर्त्ती"त्यत्र धराप्रीतिशब्दार्थः पर्वतप्रीतिः

पृथिवीरतिश्च तदुभयकर्मत्वमेकविधे धात्वर्थे विधानेऽन्वेति तथा च देवाधिनाथकर्तृताकपर्वतप्रीतिकर्मताकविधानसमानकालिकपृथिवीरतिकर्मताकविधानानुकूलकृतिमान् क्षितीश इत्यन्वयबोधः । तथाविधनानार्थान्वितनथाविधविभक्त्यर्थस्यैकैकं सहार्थस्य विशेषणे विशेष्ये समानानुपूर्वीकतिङन्तनानाविधधातुप्रतिपाद्ये नानाविधेऽप्यन्वयः यथा"शिशुः पयो धास्यति सागरैः सह" इत्यत्र धास्यतिपदेन धयत्यर्थस्य पानस्य दधात्यर्थस्य धारणस्य भावित्वस्य कृतेश्च स्मृतिर्जन्यते पयःपदेन क्षीरनीरयोर्द्वितीयया कर्मत्वस्य तृतीयया कर्तृत्वस्येति । सागरकर्तृत्वं नीरकर्मत्वं च धारणे क्षीरकर्मत्वं पाने योग्यताबलाद्व्युत्पत्तिवैचित्र्याच्चान्वेति एवं सागरकर्तृताकनीरकर्मताकधारणसमानकालिकक्षीरकर्मताकभाविपानानुकूलकृतिमान् शिशुरित्यन्वयबोधः सहार्थान्विते विशेषणे विशेष्ये वा धात्वर्थे एकत्र कर्मत्वाद्यन्वययोग्योपस्थापकपदस्य न तिङन्तेन सहाकाङ्क्षा अत एव पयःपदेन क्षीरमात्रोपस्थितौ न तथा शाब्दबोधः न वा"क्षीरं शिशुर्धास्यति सागरैः सह"ति प्रयोगः । ननु शिशुः क्षीरं धास्यति पयो वेत्यत्र धास्यतिपदेन सह द्वितीयान्तस्य क्षीरपदस्य क्षीरमात्रोपस्थापकपयःपदस्य वा आकाङ्क्षाया दृष्टत्वात्प्रकृते कुतो नाकाङ्क्षा न च प्रकृते तिङन्तेन धारणस्याप्युपस्थापनेन धारणे क्षीरकर्मत्वान्वययोग्यताया विरहात् पानेऽपि न क्षीरकर्मत्वान्वयाकाङ्क्षेति वाच्यं तावताऽप्यर्थभेदेऽप्यभिन्नायाः शब्दधर्मस्वरूपाकाङ्क्षाया अवैकल्यात् योग्यताविरहस्य

वक्तुमुचितत्वात् नानार्थस्यैकत्र योग्यताविरहेऽप्यपरत्रा-
न्वयस्य दर्शनाच्च यथा सैन्धवो नील इत्यादौ तत्कुतो
न दर्शितप्रयोगः पाने क्षीरकर्मत्वान्वयसम्भवादिति चेत्
नैवं नानार्थशब्दस्यापि हि नानाविधार्थतात्पर्येनाना-
विधार्थान्वययोग्यार्थकेनैव पदेन सहाकाङ्क्षा अत एव
लवणाश्वतात्पर्ये सति सैन्धवौ नीलाविति न प्रयोगः
नीलान्वयासम्भवात् न च लवणेऽयोग्यत्वान्न नीला-
न्वयः आकाङ्क्षा तु वर्त्तत एवेति वाच्यं तथा सत्यश्वे
नीलान्वयबुद्धिप्रसङ्गात् तस्मात् तात्पर्यविषयीभूतभा-
स्यतिपदार्थे स्वार्थान्वयबुध्यभावप्रयोजकाभावप्रतियो-
गित्वस्वरूपाकाङ्क्षा द्वितीयान्तक्षीरपदे नास्ति क्षी-
रमितिपदे सत्यप्यन्वयबुद्धेरभावात् न चैवमग्निना
सिञ्चतीत्यत्राप्याकाङ्क्षाविरहान्न शाब्दबोध इति वा-
च्यम् । अग्निपदस्य द्रवद्रव्यपरतायामाकाङ्क्षासम्भवादर्थ-
भेदेनाकाङ्क्षाभेदाभावात् वह्निपरतायामप्याकाङ्क्षासत्त्वा-
त् तात्पर्यविषयत्वस्यापरपदार्थविशेषणत्वात् आका-
ङ्क्षाग्रहधर्मिपदस्यार्थे तद्विशेषणत्वाविवक्षणात् अग्नि-
नेति पदस्य धर्मित्वे नाकाङ्क्षाविरहः किं तु योग्य-
ताविरहः पाकलाक्षणिकसिञ्चतिपदस्य धर्मित्वेऽप्यग्नि-
तात्पर्यकस्याग्निनेतिपदेन सहाकाङ्क्षा सम्भवत्येवेति ।
यत्र क्षीरमितिपदस्य क्षीरनीरयोरुभयोरुपस्थापकत्वं
तत्रोभयार्थकस्य पय इति पदस्येवाकाङ्क्षाया अवै-
कल्यात् क्षीरकर्मत्वस्य पाने नीरकर्मत्वस्य धारणे-
न्वबोधो भवत्येवेति । यत्र द्वितीयान्तपदं विनैव सा-
गरैः सह विभुर्यास्यतीति प्रयोगः तत्र कर्मत्वान्वयबो-

र्थं विनैव शाब्दबोधः पानधारणोभयकर्मत्वान्वययोग्यार्थ-कस्य पय इत्यादिद्वितीयान्तपदस्य तद्घटिताकाङ्क्षा-याश्च विरहान्न कर्मत्वान्वयबोध इति गुरुचरणदर्शिता रीतिरिति । दर्शितेषु श्लेषस्थलीयसहोक्त्यलङ्कारेषु एका-नुपूर्वीकशब्दप्रतिपाद्ययोरर्थयोस्सर्वत्र तादात्म्यं व्यञ्जन-या प्रतीयते वैयञ्जनिकबोधे बाधो न विरोधी अत एव "सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिवे"त्यत्र कलकलसाहित्यकलासाकल्ययोरभेदाध्यवसाये साधार-णधर्मोपपत्त्योपमाप्रतीतिः तथा च पानधारणयोस्तादा-त्म्याध्यवसायेनैक्ये सहार्थविशेषणविशेष्ययोरेकजाती-यक्रिययोः क्षीरनीरयोस्तादात्म्याध्यवसायादेकजातीय-ककर्मत्वान्वयः सागरकर्तृत्वस्य विशेषणे विशेष्ये तिङ-र्थकर्तुः तत्र शिशोरन्वय इति सर्वविद्याविदः । पयः-पदवाच्ये लक्षणा पयःपदवाच्यं कर्मत्वं पानधारणयोर-न्वेतीति व्यञ्जनाविद्वेषिणः । "पुमान् स्त्रिये"ति सूत्रस्य स्त्रिया सहोक्तौ पुमान् शिष्यत इति व्याख्याने उक्तौ कर्म-णोऽनभिधानात् कृद्योगप्रयुक्तकर्मत्वार्थकषष्ठ्यन्तं पुंस इति पदमध्याहार्यमथ वा प्रधाने शिष्धात्वर्थे शक्तिम-तः पुंसो गुणे वच्धात्वर्थे उक्तौ शक्तिरनुक्ताऽपि प्रतीयते यथा आहूय ब्राह्मणाय ददातीत्यत्रानुक्तमपि ब्राह्मण-कर्मत्वमाह्वाने प्रतीयते । तदुक्तम् ।

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
गुणे यदा तदा तद्वदनुक्ताऽपि प्रतीयते ॥

इति तथा च अनुक्तमपि कर्मत्वं पदाध्याहारे प्रका-रतया अपरथा पुंसोऽन्वये संसर्गतयोक्तौ भासत इति न

काऽप्यनुपपत्तिः। शाब्दिकास्तु सहपदं व्यञ्जकमेव क्रिययोः समानकालिकत्वादिः संसर्गमर्यादयैव भासते"वृद्धो यूने"ति निर्देशात् अतः पुत्रेणागच्छतीति वाक्यं प्रमाणमिति वदन्ति। तन्न सुन्दरम्। "सहयुक्तेऽप्रधाने" इत्यत्र सहयुक्तपदस्य वैयर्थ्यापत्तेः सहशब्दस्य निरर्थकत्वे योगासम्भवात् न चात्र सहशब्दसमभिव्याहार एव योग इति वाच्यं सहार्थेन योगे इति काशिकोक्तेरनुपपत्तेः साकंसार्द्धंसमंशब्दैर्योगे तृतीयानुपपत्तेः वृद्धो यूनेत्यत्र "प्रकृत्यादिभ्य" इति वार्त्तिकेन सिद्धा तृतीया तस्याः समभिव्याहारोऽर्थस्तथा च पुत्रशब्दसमभिव्याहारवान् वृद्धशब्द एकविभक्तौ शिष्यत इति सूत्रवाक्यार्थम् इतिनिर्देशस्य निरर्थकसहशब्दनिष्ठव्यञ्जकत्वाज्ञापकत्वाच्च। दर्शितातिरिक्तोऽपि कश्चित्सहार्थः यथा समवायेन सह घटत्वं प्रतियोगितामवच्छिनत्तीत्यत्र निरूप्यत्वमवच्छेदकता चावच्छिदो धातोरर्थः निरूप्यत्वं च ज्ञानजन्यज्ञानविषयत्वं तत्र ज्ञानमात्रं फलविधयाऽर्थो द्वितीयान्तार्थस्य प्रतियोगित्वाधेयत्वस्य विषयतासंबन्धावच्छिन्नस्य फले ज्ञाने तस्य स्वजन्यज्ञानविषयत्वेन संबन्धेनावच्छेदकत्वेऽन्वयः सहार्थः समाननिरूपकत्वं तत्रापि निरूपकमात्रं सहार्थः निरूपकं च ज्ञानजनकज्ञानविषयः तत्रापि ज्ञानं विषयस्य सहार्थः ज्ञानविषययोरेकपदार्थयोरपि परस्परमन्वयः आधेयत्वलक्षणकर्तृत्वार्थकतृतीयान्तार्थस्य समवायाधेयत्वस्य प्रतियोगिताककर्मके धात्वर्थे तस्य स्वविषयकज्ञानजनकत्वेन संबन्धेन ज्ञानस्य विषयतया विषये तस्य स्वविषयकज्ञानजन्यज्ञान-

विषयत्वेन तथाविधे धात्वर्थे तस्य तिङर्थाश्रयत्वे तस्य घटत्वेऽन्वयः। एवं समवायवृत्तेः प्रतियोगितावृत्तिज्ञान-ज्ञाप्यावच्छेदकत्वस्य ज्ञापकज्ञानविषयो यस्तद्विषयका-ज्ञानज्ञाप्यायाः प्रतियोगितावृत्तिज्ञानज्ञाप्यावच्छेदक-ताया आश्रयो घटत्वमिति शाब्दबोधः। अभावनिरूपकः प्रतियोगितावच्छेदकविशिष्टः प्रतियोग्येव प्रतियोगित्व-तदवच्छेदकत्वनिरूपकः स तु निरूपकत्वेन सहार्थे निविशते न तु तत्त्वेन इति न चात्रापि समानकालि-कत्वं सहार्थस्तत्रैव प्रतियोगिताकर्मकावच्छेदकस्य विशे-षणतया विशेष्यतया चान्वय इति वाच्यम्। तथासति पटत्वेन सह घटत्वमवच्छिनत्तीति प्रयोगप्रसङ्गात् पट-घटाभावप्रतियोगितावच्छेदकतयोः समानकालिकत्व-बाधात्। ननु यथा पुत्रेण सह ग्रामं गच्छतीत्यत्र पद्म-क्तिकर्मकस्यैव धात्वर्थस्य विशेष्यत्वे सह प्रयोगः साधुस्त-थात्रापि समवायेन सहेत्यत्र प्रतियोगिताव्यक्तेरेकस्यो-भयकर्मत्वाङ्गत्युपपत्तिः पटत्वेन सह घटत्वमित्यत्रैकप्र-तियोगित्वव्यक्तेरुभयकर्मत्वासम्भवान्नोपपत्तिरिति चेत् न महानसीयत्वेन सह वह्नित्वमवच्छिनत्तीत्यत्रैकप्र-तियोगित्वव्यक्तेरुभयकर्मत्वासम्भवादसाधुत्वप्रसङ्गात् अ-वच्छेदकधर्मभेदेन प्रतियोगिताभेदात्। एवं चक्षुःप्र-तियोगिकत्वेन संयोगे चाक्षुषकारणतामवच्छिनत्ती-त्यत्रापि समाननिरूपकत्वं सहार्थः न तु समानकालिक-त्वं तथासत्यद्भूतरूपत्वेन सह संयोगत्वमवच्छिनत्तीति प्रयोगप्रसङ्गात् न चात्रैकव्यक्तिकर्मकत्वसम्भवः कर्मणः कारणताया अवच्छेदकधर्मभेदेन भेदादवच्छेदकताया

व्यासज्यवृत्तित्वस्यान्यत्र दूषितत्वादिति कारणताया निरूपकावन्वयव्यतिरेकौ तदवच्छेदकत्वनिरूपकाविति बोध्यम् । क्वचिदभेदोऽपि सहार्थः यथा पटेन सह घटं साक्षात्करोतीत्यत्र तृतीयाद्वितीययोः कर्मत्वमर्थः तच्चा-धेयत्वं सहार्थस्याभेदस्य विशेषणे तृतीयार्थविशेषे धात्व-र्थे द्वितीयार्थोऽन्वेति । एवं घटवृत्तिलौकिकविषयताकसा-क्षात्काराभिन्नघटवृत्तिलौकिकविषयताकसाक्षात्काराश्र-यत्वं वाक्यार्थः न चात्र समानकालिकत्वं सहार्थः तथा-सत्यव्यवहितज्ञानभेदेन तथाप्रयोगप्रसङ्गात् न चेष्टाप-त्तिः तथासति रूपेण सह गन्धं साक्षात्करोतीति प्रयो-गप्रसङ्गादिति । जात्या सह व्यक्तिं घटत्वेन सह घटं वा जानातीत्यत्र सामग्रीघटकसामग्रीकत्वं सहार्थः जाति-वृत्तिविषयताकज्ञानसामग्रीघटकव्यक्तिवृत्तिविषयताक-ज्ञानाश्रयत्वं घटत्ववृत्तिविषयताकज्ञानसामग्रीकघटवृ-त्तिविषयताकज्ञानाश्रयत्वं च वाक्यार्थः न चात्र समा-नकालिकत्वमभेदो वा सहार्थस्तथासति जात्या सहाभा-वं घटत्वेन सह पटं वा जानातीतिप्रयोगप्रसङ्गात् जा-त्यभावयोर्घटपटयोश्च समूहालम्बनसम्भवात् प्रत्यक्षे व्य-क्तीन्द्रियसन्निकर्षो जातीन्द्रियसन्निकर्षघटकः अनुमितौ व्यापकताया ज्ञानं तदवच्छेदकत्वज्ञानघटकं शाब्दबोधे पदार्थस्योपस्थितिस्तदवच्छेदकोपस्थितिघटिकाप्रयोजि-केति घटकत्वं व्यापकत्वमिति प्रमायामीदृशसामग्री सम्भवति न तु भ्रमे अत एव भ्रमस्थले घटत्वेन सह प-टं जानातीति सहपदघटितो न प्रयोगः किं तु सहपद-शून्य एवेति । जात्या सह व्यक्तिं भासते इत्यत्र भासते-

र्विषयत्वमर्थः तिङ आश्रयत्वमर्थः इच्छायां भासते सुख-
मित्यत्र सप्तम्यर्थस्याधेयत्वस्य यथाऽन्वयः तथा सप्तमीविव-
रणे वक्ष्यते एवं चात्र सहार्थः प्रतियोगिसामग्रीघटक-
सामग्रीकप्रतियोगित्वं न तु समानकालिकत्वं तथासति-
ज्ञानभेदेनेच्छाज्ञानाभ्यां वा जातिव्यक्त्योरवभासे तथा-
प्रयोगप्रसङ्गात् तृतीयायाः कर्तृत्वलक्षणमाधेयत्वमर्थः
तथा च जातिवृत्तिविषयत्वप्रतियोगिसामग्रीकप्रतियो-
गिकविषयत्वाश्रयो व्यक्तिरित्यन्वयबोधः। जातिव्यक्तिवि-
षयत्वयोः प्रतियोगिज्ञानमिच्छा वा तत्र जातिविषय-
त्वप्रतियोगिकज्ञानसामग्रीघटकत्वं व्यक्तिविषयत्वप्रति-
योगिज्ञानसामग्र्या दर्शितमेव इच्छाविषयताया ज्ञान-
विषयत्वाधीनत्वात् जातिविषयकेच्छासामग्र्या व्यक्ति-
विषयकेच्छासामग्रीघटितत्वमप्युपपन्नमेव न चात्राभि-
न्नप्रतियोगिकत्वं सहार्थो लाघवादिति वाच्यं तथासति
जातिव्यक्त्योः समूहालम्बने तथाप्रयोगप्रसङ्गादिति जा-
त्या सह व्यक्तिमवगाहते बुद्धिरित्यत्रावगाहतेर्विषयताफ-
लकप्रतियोगित्वव्यापारोऽर्थः तृतीयाद्वितीययोः कर्मत्व-
लक्षणमाधेयत्वमर्थः तिङ आश्रयत्वमर्थः प्रयोजकसा-
मग्रीघटकसामग्रीप्रयोज्यत्वं सहार्थः प्रधानक्रियाक-
र्त्र्या बुद्धेर्गुणक्रियायामपि कर्तृत्वेनान्वयः एवं बुद्धिक-
र्तृकजातिवृत्तिविषयताप्रतियोगित्वप्रयोजकसामग्रीघट-
कसामग्रीप्रयोज्यस्य व्यक्तिवृत्तिविषयताप्रतियोगित्वस्या-
श्रयो बुद्धिरित्यन्वयबोधः। जातिविषयकज्ञानसामग्र्येव
जातिविषयत्वप्रतियोगित्वप्रयोजिका एवं व्यक्तिविषय-
कज्ञानसामग्र्येव व्यक्तिविषयत्वप्रतियोगित्वप्रयोजिके-

ति तयोश्च घटितघटकभावो दर्शित एवेति शैवालेन सह जलेन संयुज्यते वक्षः वामतटेन सह दक्षिणतटेन संयुज्यते नद्यादौ तृतीययोरन्यतरत्वलक्षणं हेतुत्वमर्थः न तु प्रतियोगित्वमर्थो बाधात् न चाऽऽधेयत्वं साक्षात्सम्बन्धावच्छिन्नाधेयत्वस्य धात्वर्थान्वयाव्युत्पत्तेः एकक्रियाप्रयोज्यत्वं सहार्थः एवं शैवालजन्यसंयोगप्रयोजकक्रियाप्रयोज्यजलजन्यसंयोगाश्रयो वक्ष इति शाब्दबोधः। न चात्र समानकालिकत्वं सहार्थः तथासति वायुना सह शैवालेन सह संयुज्यते वक्ष इति प्रयोगप्रसङ्गात् सहार्थे प्रयोज्यत्वप्रवेशात् शाखया सह वृक्षेण संयुज्यते कपिरित्यत्राप्युपपत्तिः। एवमन्याद्दशोऽपि सहार्थः सुधीभिरूह्यः। इत्थं च "सहयुक्तेऽप्रधाने" इति सूत्रस्य सहार्थयोगि प्रधानक्रियान्वयिविभक्त्यर्थसजातीये गुणक्रियान्वयिन्यर्थे तृतीया भवतीत्यर्थः सहशब्दतुल्यार्थाः साकंसार्धंसमंगब्दा बोध्याः। अङ्गविकारार्थिकां तृतीयां ज्ञापयति। "येनाङ्गविकारः" इति सूत्रम्। अस्यार्थः काशिकावृत्तौ अङ्गशब्दो अङ्गसमुदायिनि शरीरे वर्तते येनेति तदवयवो हेतुत्वेन निर्दिश्यते येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीयाविभक्तिर्भवति इति लक्ष्यत्वं प्रयोज्यत्वे विकृतस्य प्रयोजकत्वं विशिष्ये बाधे विकारे विशेषणे पर्यवस्यति तथा चावयवस्य प्रकृत्या लाभात्तृतीयाया विकारोऽर्थः यथा अक्ष्णा काण इत्यत्र चाक्षुषप्रयोजकगोलकद्वयाभाववान् तथाविधगोलकवान् काणपदार्थः गोलकस्य स्वच्छिद्रद्वारा चक्षुषो निर्गमेण संनिकर्षसम्पादनेन चाक्षुप्रयोजकत्वं चक्षुषो गोलकान्तर्वर्तित्वात् न तु

तस्य कृष्णतारकावर्तित्वं कृष्णतारकाचाक्षुषापत्तेः आलोकविरहान्न गोलकान्तश्चाक्षुषमिति एवं सति काणपदार्थैकदेशे तथाविधगोलकद्वयाभावे तृतीयार्थविकारस्य प्रयोज्यत्वेनान्वय अक्षिपदं गोलकपरं तथा च गोलकविकारप्रयोज्यतथाविधगोलकद्वयाभाववान् तथाविधगोलकवानित्यन्वयबोधः अङ्गविकार इति शब्दस्य प्रयोजनं तृतीयार्थविकारस्यावयविशरीरभिन्नेऽन्वयो नेति तेनाक्षि काणमस्येत्यत्र न तृतीया तदर्थान्वययोग्यस्य शरीरस्य शब्देनालाभात् ननु तथाप्यक्ष्णा चैत्र इति प्रयोगः स्यात् चैत्रपदेन शरीरोपस्थापनात् न च चैत्रे तत्त्वे वा तृतीयार्थविकारस्य प्रयोज्यत्वान्वयासम्भवात् न तथाप्रयोग इति वाच्यम्। तथासति काणमित्यत्र काणपदस्य विकारवदर्थकतया अक्षिपदार्थे गोलकेऽभेदान्वययोग्यतया तृतीयार्थविकारप्रयोज्यत्वान्वयायोग्यत्वादेव तृतीयाप्रसक्तिविरहादभेदेन प्रयोज्यप्रयोजकभावासम्भवादित्यङ्गविकारशब्दो निष्प्रयोजन एवेति चेन्न काणमित्यत्र काणपदस्य चाक्षुषाप्रयोजकार्थकतया तदर्थतावच्छेदके तृतीयार्थविकारप्रयोज्यत्वान्वयसम्भवात् तृतीयाप्रसक्तेः तन्निषेधफलकत्वेनाङ्गविकारशब्दस्य सप्रयोजनकत्वसम्भवात् ननु तथासति चाक्षुषाप्रयोजकं गोलकं काणपदस्यार्थः तद्वत्यवयविनि शरीरे निरूढलक्षणाऽस्तु किं काणपदस्य नानार्थतयेति चेत् न हि काणपदस्य नानार्थत्वाभ्युपगमः किं तु तथाविधगोलकमेव शक्यं लक्ष्योऽवयवी लक्ष्यतावच्छेदकं तु न तथाविधगोलकवत्त्वमुत्पातैकगोलके काणपदाप्रयोगप्रसङ्गात्किं तु

पूर्वोक्तोभयधर्मवत्त्वमिति । ननु चाक्षुषप्रयोजकत्वं यदि चाक्षुषोपधानप्रयोजकत्वं तदा निमीलितैकलोचने काणपदप्रयोगापत्तेः यदि चाक्षुषस्य योग्यप्रयोजकत्वं तत्रापि प्रयोजकत्वमुपधायकत्वं तदापि पूर्वोक्तो दोषः निमीलने सति सन्निकर्षादेर्योग्यस्यानुपधानात् यदि योग्ययोग्यत्वं तदा पुष्पकादिना गोलकच्छिद्रसुद्रणे काणपदाप्रयोगप्रसङ्गः तत्र गोलके निर्गमद्वारकमनोनिकर्षयोग्यतायाः सत्त्वात्पुष्पकाद्यपनये चाक्षुषमनोनिकर्षयोः सम्भवादिति निरूढलक्ष्यतावच्छेदकमर्थकं न सम्भवतीति चेत् न अविकृतगोलकत्वस्यैव योग्यतात्वात् सपुष्पकगोलके तद्विरहादेव काणपदप्रयोगसम्भवात् विकारास्तु गोलकनिष्ठप्रत्यासत्त्या चाक्षुषप्रतिबन्धकतावच्छेदकतयाऽनुगमनीयाः अथ वा गोलकद्वयप्रयोज्यचाक्षुषाभावचाक्षुषोभयवत्त्वमवच्छेदकतासंबन्धेन काणपदस्य लक्ष्यतावच्छेदकं निमीलितैकलोचनेऽतिप्रसङ्गवारणायादृष्टाद्वारकप्रयत्नावरुद्धगोलकवदन्यत्वेन तद्विशेषणीयं गोलकविकारादेर्दुरदृष्टजनकप्रयत्नसाध्यत्वात् काणेऽप्रसङ्गवारणायादृष्टाद्वारकत्वं प्रयत्ने विशेषणं पूर्वं निमीलितैकलोचनस्य कालान्तरेण गोलकविकारे सति तथाविधगोलकवदन्यत्वस्य विकृतगोलके शरीरे सत्त्वात् आहारपरिणामानादिना शरीरभेदादिति न काणपदाप्रसङ्गः यदि च काणस्याविकृताक्षिनिमीलने तथाविधगोलकवदन्यत्वविरहात् स्वापे चोभयघटकचाक्षुषस्य विरहात्काणपदाप्रसङ्ग इति विभाव्यते तदा तथाविधातथाविधगोलकद्वयवदन्यत्वविशेषणमुभयघटक-

त्वं च चाक्षुषप्रागभावस्य बोध्यमिति । यद्वा तथावि-
धप्रयत्नाप्रयोज्यत्वं चाक्षुषाभावे विशेषणं तत एव नि-
मीलितैकलोचने नातिप्रसङ्गः यदि च रोगविशेषे कु-
पथ्यभोजनादिना पुष्पकाद्युत्पत्तिस्तदा गोलकविकारा-
प्रयोज्यत्वं प्रयत्ने विशेषणमतो नाप्रसङ्गः उभयघट-
कत्वं च चाक्षुषप्रागभावस्य चाक्षुषयोग्यत्वस्य वा यो-
ग्यत्वं च चक्षुर्निर्गमावरोधकशून्यच्छिद्रवत्वे सति चक्षुः
संयोगिगोलकत्वं गोलके तथाविधगोलकसमवेतत्वं
शरीरे बोध्यमवच्छेदकतासंवन्धेन शरीरे ज्ञानादेरुत्पा-
दान्न चाक्षुषप्रागभावहानिरतः सुप्ते काणे न काणपदा-
प्रयोगः योग्यत्वस्य घटकत्वे तु मृते ऽपि काणे शरीरस्य
यावन्न शोफः शोषो वा तावत्काणपदप्रयोगो निष्प्रत्यूह
एव तद्गोलकव्यक्तेः सत्त्वात् सोफशोषयोरनन्तरं तत्र
काणशब्दो गौण इति एवं गोलकविकाराप्रयोजकय-
त्नाप्रयोज्यगोलकद्वयप्रयोज्यचाक्षुषाभाववत्त्वे सति च-
क्षुर्निर्गमावरोधकशून्यच्छिद्रवच्चक्षुःसंयोगिगोलकसमवेतः
काणपदार्थः एवं तृतीयार्थो विकारः प्रयोज्यत्वेन
दर्शितचाक्षुषाभावेऽन्वेति स च विकारः क्व चिद्गो-
लकनाशः यद्बलादुत्खातैकगोलके क्व चिच्चक्षुर्नाशः
यद्बलात्प्रसन्नैकचाक्षुषाप्रयोजकगोलके मांसदृढियुतैक-
गोलके च क्व चित्पुष्पकादिः यद्बलात्पुष्पकादिमदेक-
गोलके काणपदस्य प्रयोगः न च पुष्पकादिना चक्षुर्ना-
श एवेति वाच्यं पुष्पकाद्यपनये चाक्षुषानुत्पत्तिप्रसङ्गा-
त् न च तत्र पुष्पकाद्यपनायकेन चक्षुरन्तरोत्पाद इति
वाच्यं चक्षुर्नाशचक्षुरन्तरतदुत्पत्तिप्रागभावनाशानां क-

ल्पनापेक्षया पुष्पकादेश्चक्षुर्निर्गमप्रतिबन्धकत्वकल्पनाया एव लघुत्वात् यत्र तु पुष्पकाद्यसत्त्वेऽपि न चाक्षुषं तत्र चक्षुरन्तरोत्पादककल्पनाऽपि न सम्भवति किं तु पुष्पकादिप्रयोजकव्यक्तिविशेषस्य चक्षुर्नाशकत्वकल्पनैव अन्यथानुपपत्तेः विकारास्तु चाक्षुषप्रतिबन्धकतावच्छेदकत्वोपलक्षितधर्मवत्तयाऽनुगतीकृता अतो नाननुगमः एवं काकस्य शापेन गोलकद्वयप्रयोज्यचाक्षुषाभावेन शप्तप्रयोज्येन न काणत्वमत एवाविकृतगोलके काके न काणव्यवहारः न च शापस्यातीततया आधुनिककाकानां कथमेकनेत्रत्वमिति वाच्यम् । काकत्वसामान्यलक्षणया सकलकाकोपस्थितौ शापस्य सकलकाकविषयत्वात् शापविषयता स्वसंबन्धमात्रेणैकनेत्रत्वं प्रयोजयति । अथ वा शापकालिककनेत्रकाकजातीयप्रयोज्यत्वेनाधुनिककाकानामेकनेत्रत्वं यथा द्विनेत्रजातीयमनुष्यादिप्रयोज्यत्वेन मनुष्यादीनां द्विनेत्रत्वं न "चैषीकमस्त्रमुदपास्यदर्थेनमक्ष्णा काणीचकार स रमो रघुराजपुत्र" इति कथं प्रयोग इति वाच्यम् । एषीकास्त्रप्रयुक्तगोलकोपघातस्यापि तथाविधचाक्षुषाभावप्रयोजकत्वात् विकारस्य स्वसंबन्धिगोलकप्रयोज्यचाक्षुषं प्रति प्रतिबन्धकत्वात् तादृशचाक्षुषाभावोऽपि चाक्षुषस्यैकदा गोलकद्वयप्रयोज्यत्वाभाव इव गोलकद्वयप्रयोज्यचाचाक्षुषाभावं प्रयोजयति तथा चात्र तृतीयार्थ ऐषीकास्त्रप्रयुक्तोपघातस्तत्प्रयोज्यत्वं गोलकद्वयप्रयोज्यचाक्षुषाभावे काकनिष्ठेऽन्वयितमिति । अत एव काणमैषीकेणाहनदिति नोक्तमुक्तं च काणीचकारेति अत एव

गोलकविकाराप्रयोजकत्वं प्रयत्नविशेषणमर्थवत् अन्यथाऽत्र काणत्वानुपपत्तेः शापस्तु न गोलकविकारप्रयोजकः गोलकचक्षुःसंयोगस्यानुत्पादो न विकारः विकारगणापठितत्वात् नाशस्तु गणितत्वाद्भवति विकार इति यदि चानुत्पादोऽपि विकारस्तदा विकारप्रयोजकत्वात् शापोऽपि विकारस्तृतीयार्थः प्रयोजकत्वेन तथाविधचाक्षुषाभावेऽन्वेति सर्वे काकाः काणा इति प्रयोगोऽपीष्यत एवेति। एवं पादेन खञ्ज इत्यत्र पादद्वयप्रयोजकप्लुतान्यगत्यभाववत्त्वे सति प्लुतान्यगतियोग्यपादवान् खञ्जपदार्थः खञ्जस्यापि प्लुतगतिमत्त्वादप्रसङ्गवारणाय सत्यन्तमुपात्तं विकृतोभयपादवत्यतिप्रसङ्गवारणाय विशेष्यदलं पादस्य प्लुतान्यगतियोग्यत्वं च विजातीयसंयोगवदवयवारब्धत्वं प्लुतान्यप्रयोजकमारम्भकसंयोगगतं वैजात्यमेवावश्यकत्वाद्यद्विरहाज्जातमात्रबालस्यापि विसदृशपादाद्यवयवत्त्वमालच्यते। एवं तृतीयार्थो विकारः स चात्र क्व चिदारम्भकसंयोगः क्व चिदारम्भकसंयोगनाशकखड्गादिप्रहारः क्व चिद्रुधिरास्थिमांसाद्यवयवनाशप्रयोजको रोगविशेष ईदृश आहाराभावश्च क्व चिदारम्भकसंयोगनाशकवायुप्रयोजकः खल्याद्याहारः तृतीयार्थः प्रयोजकत्वेन तथाविधगत्यभावेऽन्वेति। एवं पादविकारप्रयुक्तपादद्वयप्रयोजकप्लुतान्यगत्यभाववान् प्लुतान्यगतियोग्यपादवानित्यन्वयबोधः। विकारास्तु तथाविधगतिप्रतिबन्धकतावच्छेदकत्वोपलक्षितधर्मवत्तयाऽनुगमनीयाः क्व चित् शापोऽपि विकारः अत एव सौरिः पादेन खञ्ज इति व्यवहारः

एवं पाणिना कुणिरित्यत्र कुणिपदार्थः कुकरत्वं तच्च करद्वयप्रयोज्यकार्याभाववत्त्वे सति तथाविधकार्ययोग्यपाणिमत्त्वं तथाविधकार्यं तु धनुःप्रहरणादितान्त्रिकमुद्रादियोग्यत्वं च पाणेः पादवद्बाध्यम् । तृतीयार्थो विकारः स चाङ्गुलीगलनादिः एवं पाणिविकारप्रयोज्यकरद्वयप्रयोज्यकार्याभाववान् तथाविधकार्ययोग्यपाणिमानित्यन्वयबोधः यदि च पाणिभ्यां कुणिरिति प्रयोगस्तदा करद्वयप्रयोज्यकार्याभाववत्त्वमेव कुणित्वं बोध्यमिति । एवं कार्याभावस्याङ्गविकारत्वोपगमे "तान्धदृशावधिराणि पन्नगकुलान्यष्टावि"ति प्रयोगस्तत्र बधिरत्वं श्रावणप्रत्यक्षाभावः पन्नगस्याक्षिगोलकं श्रवणेन्द्रियाधिष्ठानं तत्र गोलकावच्छिन्ने श्रोत्रे शब्दानुत्पादो गोलकस्य विकारस्तृतीयार्थः तस्य प्रयोज्यत्वेन श्रावणाभावेऽन्वयः एवं नेत्राभ्यामन्ध इति प्रयोगोऽपीष्ट एव चाक्षुषाभावे अन्धत्वे नेत्रद्वयविकारस्य प्रयोज्यतयाऽन्वयः । एवं नासिकया घ्रातेत्यत्र नासिकाया विकारः घ्राणसन्निकर्षप्रयोजकनिर्गमप्रतिबन्धकः कफादिः क्वचिद् घ्राणनाशश्च तस्य प्रयोज्यत्वेन घ्राणजाभावेऽघ्रातृत्वेऽन्वयः । एवं जिह्वया रसयितेत्यत्र रसननिर्गमप्रतिबन्धको रोगादिः क्वचिद्रसननाशः क्वचित् रसनाशश्च जिह्वाया विकारस च रासनाभावेऽरसयितृत्वेऽन्वेति एवं त्वचाऽस्पृशकाइत्यत्र त्वचश्चर्मणो विकारः स्पर्शनेन्द्रियनिर्गमप्रतिबन्धको गजचर्मादिरोगः क्वचित्स्पर्शननाशश्च स च प्रयोज्यत्वेन स्पार्शनाभावेऽस्पृशकत्वेऽन्वेति । एवं श्रोत्रेण बधिर इत्यत्र श्रोत्रं कर्णशष्कुली तस्याः स्वावच्छिन्ने न-

भमि मन्क्षालुत्पादः पूर्वोक्त एव स च रोगविशेषेणाहृष्ट-क्षितिपविरहेण वा यथार्थोऽयं प्रयुज्यत इति । अवयवस्य नाशमकृत्वाऽपदय इत्येतयोरपि विकारः अत एव "स वाला आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचन" इत्यत्र तृतीययोरुपदयोरर्थः स च प्रयोज्यत्वेन भुजचतुष्टयसंबन्धोऽन्वेति वपुःपदं पूर्वकायपरमिति वदन्ति । तत्र जानुभ्यामुद्दिष्टः संमुखेति उद्देशा पितपिडल इति च प्रयोगाभ्युपगमवादः तृतीयाद्योपदयस्यान्वयसम्भवात् यदि चोभयोऽर्थो नाभ्युपेयते तदा चतुर्भुजशब्दस्य चतुःसंख्यकभुजसमवेतोऽर्थस्तत्र तृतीयार्थोऽभेदो वपुर्विशेषितोऽन्वेति वर्णेन लोहित इतिवत् मुखविशेषितमाधेयत्वं तृतीयार्थो लोचनत्रयेऽन्वेति अवयवस्याप्यवयविष्टत्तित्वं वृक्षे शाखेतिप्रतीतेः वपुषा मुखेनेत्युभयत्र तृतीया "प्रकृत्यादिभ्य" इतिवार्त्तिकेन सिध्यति । उपलक्षणे तृतीयां ज्ञापयति । "इत्थंभूतलक्षणे" इति सूत्रम् । अस्यार्थः कंचित्प्रकारं प्राप्तः इत्थंभूतः तस्य लक्षणमित्थंभूतलक्षणं तत्र तृतीयाविभक्तिर्भवतीति काशिका प्रकारो द्विविधः विशेषणमुपलक्षणं च स्वसमानकालिकबुद्धिप्रकारो विशेषणं स्वासमानकालिकबुद्धिप्रकार उपलक्षणं यथा गुरुणा टीका कृष्णा चैत्रमित्यत्र कृतगुरुः तथा चात्र विद्यमानकालनिष्ठस्य ध्वंसस्य कादाचित्काभावस्य वा प्रतियोगित्वं संबन्धश्च तृतीयार्थः प्रतियोगित्वं प्रकृत्यर्थे विशेषणतया संबन्धो विशेष्यतयाऽन्वेतीति एवमविद्यमानस्य गुरोष्टीका कृतेः चैत्रमित्यन्वयबोध इति केचित् । अत एव सूत्रे इत्थंभूतेत्यत्राऽतीतार्थको निष्ठाप्रत्ययोऽती-

तस्य लक्षणे संबन्धे तृतीया भवतीति सूत्रार्थोऽभिप्रायेण प्र-
त्यवालोकि, तेनार्थोऽव्ययप्रत्ययेनापत्त्वबोधनादिति निष्कृष्टे-
तन्त्रकौमुद्याकरणयोर्मतः । वस्तुतस्तु विशेषणानुयोगिनि आकृ-
तः काकादेरवयवत्वं नित्यत्वं वा विशेषणोपलक्षणयोर्लक्षणं
तथा हि यस्यां बुद्धौ यो यत्र प्रकारः स तत्र विशेषणं
विशेषणोपस्थापकमविद्यमानमुपलक्षणं यथा काकेनोप-
स्थापितः संस्थानविशेषः देवदत्तगृहे विशेषणोऽस्य भासते
तत्प्रतीतावुपलक्षणं काकः एवं जटोपस्थापितो विषय-
भोगाभावः तापसविशेषणम् एवं काकेन देवदत्तगृहा
इत्यत्र काकज्ञानजन्यज्ञानविषया देवदत्तगृहा इति ज-
टाभिस्तापस इत्यत्र जटाज्ञानजन्यज्ञानविषयस्तापस इति
चान्वयबोध इति वदन्ति तदत्र मते ज्ञानजन्यज्ञानं तृ-
तीयार्थ इति तत्र प्रतियोगिना घटेनाभाव इत्यत्र तृ-
तीयाऽनुपपत्तिः प्रतियोगिनोऽभावविशेषणानुपस्थापक-
त्वात् तदुक्तं प्रत्यक्षमणौ "प्रतियोगिनाऽभावे धर्मान्तरा-
नुपनयनाच्चेति" । शिवादित्यमिश्रास्तु साक्षात्संबद्धं वि-
शेषणं परम्परासंबद्धमुपलक्षणं तदुक्तम् ।

व्यावर्तनीयमधितिष्ठति यद्धि साक्षादेतद्विशेषणमतो
विपरीतमन्यत् । दण्डी पुमानिति विशेषणमत्र दण्डः
पुंसो न जातिरनुदण्डमतो च तस्येति ।

अनुदण्डं दण्डमनुगता जातिर्न पुंसो विशेषणं किं
त्वसौ तस्य दण्डस्येत्यर्थः उपरिभ्रमत्काकादिकं परम्प-
रासंबद्धमुपलक्षणमित्याहुः । तत्र जटाभिस्तापसो दण्डे-
न पुरुष इत्यत्र जटादण्डयोः साक्षात्संबद्धयोरुपलक्षण-
त्वानुपपत्तिरत एव मणौ साक्षात्संबन्धेऽप्युपलक्षणत्वादि-

त्युक्तम्। मणिकृदनुयायिनस्तु विशेषणमुपलक्षणमन्याद्दृशमेव तथा हि यत्रैकस्या व्यावृत्तेरनुयोगिता प्रतियोगिता चैकधर्मावच्छिन्ना तत्र व्यावृत्तेरनुयोगितावच्छेदकत्वेन प्रतियोगितावच्छेदकीभूताभावप्रतियोगित्वेन प्रतीयमानत्वं विशेषणपदप्रवृत्तिनिमित्तं यथा दण्डी पुरुष इतिनिश्चयानन्तरमदण्डपुरुषव्यावृत्तो दण्डी पुरुष इति निश्चयो जायते तत्र पुरुषत्वेनैकेनावच्छिन्ना प्रतियोगिताऽनुयोगिता चैकस्या व्यावृत्तेः तदनुयोगिता दण्डेनाप्यवच्छिद्यते तत्प्रतियोगितावच्छेदकीभूतदण्डाभावप्रतियोगित्वं च दण्डे प्रतीयते दण्डी पुरुष इत्यादौ दण्डः पुरुषविशेषणं यत्र तु प्रतियोगित्वानुयोगित्वयोर्नैकधर्मावच्छिन्नत्वं तत्र पद्मत्वावच्छेदेन कुसुमान्यपद्मादिव्यावृत्तेः प्रत्ययेऽपि कुसुमत्वं न विशेषणं पद्मस्येति। इदं तु विशेषणत्वमेकधर्मविशिष्टेऽपरविशेषणस्य बोध्यं सामान्यतो विशेषणत्वं तु व्यावृत्त्यधिकरणतावच्छेदकतया व्यावृत्तिप्रतियोगितावच्छेदकीभूताभावप्रतियोगितया च प्रतीयमानत्वं यथा दण्डीत्यत्रैकस्या एव व्यावृत्तेः प्रतियोगितावच्छेदकाभावप्रतियोगितयाऽधिकरणतावच्छेदकतया च दण्डो व्यावृत्तिबुद्धौ भासते सामान्यतो विशेषणत्वमपि दण्डस्य दण्डी पुरुष इत्यत्र सम्भवति अत एव मणौ दण्डी पुरुष इति ज्ञानानन्तरं दण्डवत्यदण्डव्यावृत्तिरवगम्यत इति प्रत्याय्य व्यावृत्त्यधिकरणता पुरुषस्य दण्डेनावच्छिद्यते न पुरुषत्वेनातिव्याप्तेरित्युक्तं सामान्यतो विशेषणत्वं व्यतिरेकिधर्ममात्रस्य सम्भवति केवलान्वयिनि धर्मे व्यावृत्तेर-

प्रसिद्धा विशेषणत्वसामान्याभाव इति । प्रतीयमान-त्वगर्भं विशेषणत्वं व्यावृत्तेर्बुद्धौ न विषयः किं तु तद-नुव्यवसायादौ काकवन्तो देवदत्तगृहा इत्यत्र देवद-त्तस्वत्वशून्यगृहव्यावृत्तिः संस्थानविशेषवत्त्वावच्छेदेन प्रतीयते न तु काकवत्त्वं तदवच्छेदकत्वं तदसत्त्व-कालेऽपि दर्शितव्यावृत्तेः प्रतीतेश्च सत्त्वान्न्यूनवृत्ति-त्वादिति काको न विशेषणमपि तु व्यावृत्तिबुद्धिप्रका-रतया व्यावृत्त्यवच्छेदकोपस्थापकतया वा व्यावर्तकत-योपलक्षणं तथा च व्यावृत्त्यधिकरणतानवच्छेदकत्वे स-ति व्यावर्तकत्वमुपलक्षणत्वमत एव मणौ प्रत्याय्य व्यावृ-त्त्यधिकरणतावच्छेदकत्वे सति व्यावर्तकं विशेषणं त-दन्यव्यावर्तकमुपलक्षणमित्युक्तं व्यावृत्त्यधिकरणताया अवच्छेदकत्वं स्वरूपसंबन्धविशेषः अत एव तदवच्छेद-कत्वं संयोगादाविव तेन समं स्वरूपसंबन्धविशेष इति मिश्रैरुक्तं व्यावर्तकत्वं व्यावृत्तिबुद्धिप्रयोजकबुद्धिविषयत्वं व्यावृत्त्यवबोधकालेऽपि विशेषणत्वबुद्धिप्रसङ्गवारणार्थमुपा-त्तम्। अत एव मणौ व्यावृत्त्युल्लेखानन्तरमेव विशेषणत्व-बुद्धिरित्युक्तं न च व्यावृत्तेरवबोधकाले तदवच्छेदकत्वाग्रह-सम्भवेनैव विशेषणत्वबुद्धेर्न प्रसङ्ग इति वाच्यम्। शब्दादि-ना तदवच्छेदकत्वग्रहसम्भवात् । अत एवादण्डव्यावृत्त्य-धिकरणतावच्छेदको दण्ड इति शब्दादवगमेऽपि तद्वत्य-दण्डव्यावृत्त्यप्रतीतेः सर्वसिद्धत्वादिन्द्रियासंनिकर्षादिना प्रत्यक्षादिसामग्र्यभावादिति मिश्रैरुक्तं एवमीदृशविशेष-णत्वाभावव्यावर्तकमुपलक्षणं वस्तु सत्युपलक्षणे प्राति-पदिकेनोपस्थापिते संबन्धमात्रं तृतीयार्थः काकेन देवद-

न्तगृहा इत्यत्र काकसंबन्धिनो देवदत्तगृहा इत्यन्वय-
बोधः एकैकस्मादेकव्यावर्तकत्वादुपलक्षणत्वमपि न स-
म्भवतीति प्रत्ययान्तेन घट इति न प्रयोगः अत एव प्र-
कारो द्विविध इत्यत्र प्रकारपदं व्यावर्तकपरतया सि-
द्धे व्याख्यातं तत्। पशुना रुद्रं यजेतेत्यत्र पशुगतमेकत्वं
विशेषणं ग्रहं संमार्ष्टीत्यत्र ग्रहगतमेकत्वमुपलक्षणमिति
प्राञ्चमानां व्यवहारः स च विशिष्टान्वयनिबन्धनः पशु-
नेत्यादौ तृतीयार्थकर्मत्वे पशोरेकत्वविशिष्टस्यान्वयः
यथा चैकत्ववैशिष्ट्यं पशौ तथोपपादितं वचनार्थविवर-
णे ग्रहमित्यादावेकत्वविशिष्टस्य ग्रहस्य संमार्गकर्म-
त्वेनान्वय इति विशिष्टान्वये पशोरेकत्वावच्छिन्नप्रति-
योगिताकः संसर्गो भासत इत्येकः पक्षः। एकत्वे पशौ च
प्रकारता पर्याप्तेति द्वितीयः। एकत्वावच्छिन्ना पशु
प्रकारताऽथ वा पशुविशेष्यतया कर्मतादिविशेष्यतया
च साक्षात्परम्परासंबन्धद्वयावच्छिन्नमेकमेवैकत्वप्रकार-
त्वं निरूप्यत इति तृतीयः। तथा चेदृशविशिष्टविषयता-
मापन्नो विशेषणमनापन्न उपलक्षणमिति। अत एव
मणावुद्देश्यान्वयप्रतियोगी धर्मो विशेषणं तदन्यदुपल-
क्षणमिति सिद्धान्तपर्यवसानं काकवन्तो देवदत्तगृहा इ-
त्यत्र उद्देश्यावा देवदत्तस्वत्वशून्यगृहव्यावृत्तेरन्वयिता-
वच्छेदकत्वं काकस्य न सम्भवतीति काको न विशे-
षणं यदि चाकाकव्यावृत्तिरुद्देश्या तदा विशेषणमेव।
एवं ग्रहमित्यादावेकत्वविशिष्टग्रहकर्मत्वस्य संमार्गेऽन्वयो
नोद्देश्यः किं तु प्रस्तुतसकलग्रहकर्मत्वस्येत्येकत्वं न
विशेषणम्। एवमुक्तविशेषणं क्वचित्प्रमेयत्वस्यापि प्रमेय

इति प्रमेयं जानातीत्यत्र प्रमेयत्वविशिष्टस्यैवास्य ज्ञा-
नेऽन्वयादन्यथा प्रयोग इति काकाभिन्नान्वयादुपलक्षणत्व-
एव न हि प्रमेयत्वविशिष्टं प्रमेयत्वप्रकारकनिश्चय प्रमेय-
त्वं न विशेषणं प्रमेयत्वस्याज्ञातत्वापत्तेरिति किंत्वुपलक्षण-
तम् । यद्वा दण्डविशिष्टपुरुषस्यान्वयो न विवक्षितस्त-
दा दण्डो न विशेषणं किं तूपलक्षणमेव दण्डेन
पुरुषमानयेत्यादिः प्रयोग इति तृतीयालक्षणे इत्थम्भूत प्र-
कारेऽर्थे सति संबन्धमात्रविवक्षया तृतीया भवतीत्याहुः ।
ननु तृतीयायाः संबन्धमात्रार्थकत्वे प्रमेयत्वेन दण्डत्वेन
वा पुरुषमानयेत्यादिकः कुतो न प्रयोग इति चेन्न स-
एव हि संबन्धस्तृतीयार्थो य उद्देश्यान्वयप्रतियोगी भ-
वति अन्यथा उपलक्षणतृतीयान्तप्रयोगस्य वैयर्थ्यापत्तेः
प्रमेयत्वादेस्तु न तादृशः संबन्धः पुरुषादाविति तत्र
प्रमेयत्वादिकं नोपलक्षणमिति काकेन देवदत्तगृहा
इत्यत्र काकस्य स्वप्रयोज्यसंस्थानविशेष उपलक्षणत्वं सं-
बन्धस्तृतीयार्थस्तस्य देवदत्तस्वत्ववदन्यगृहव्यावृत्तेनोद्दे-
श्याया अन्वयितावच्छेदकत्वात् अत एव काकपदेनो-
पस्थाप्यः काक इव तत्संबन्धस्तु मतुपा बोधितः काक-
कारितसंस्थानविशेष इति मिश्रमतं जटाभिस्तापस इ-
त्यत्र जटानां स्वप्रयोजककेशासंयमप्रयोजकव्रतवत्त्वं सं-
बन्धस्तृतीयार्थः व्रतस्य केशासंयमप्रयोजकत्वं तु केश-
संयमस्य निषिद्धतया केशसंयमेन कर्तव्यजपादिकर्मणः
कालातिपातशङ्कया यदि च संयतकेशोऽपि तापसस्त-
दा केशसंयमादिस्तस्य न कर्तव्यजपादिविरोधीति तदा
स्वप्रयोजकीभूताभावप्रतियोगिकेशसंयमाप्रयोजितावै-

गुणवत्त्वं संबन्धस्तृतीयार्थः अवैगुण्यमनिषिद्धत्वं कर्तव्यजपादिलोपविरहो वा केशसंयमप्रयुक्तजपादिलोपस्य विषयासक्ते केशिनि सम्भवान्नाप्रसिद्धिः केशसंयमप्रयुक्तजपादिलोपविरहस्य संयतासंयतकेशयोर्व्रते समानत्वादिति दर्शितव्रतत्वमेव तापसव्यावृत्तेरुद्देश्याया अन्वयितावच्छेदकं तस्य जटायाः सत्त्वासत्त्वदशायामप्यविकलत्वात्। अत एव संस्थानविशेषवत्त्वादिनेति मूले व्रतविशेषवत्त्वादिरादिपदार्थ इति दर्पणे ठक्कुराः। व्रते विशेषो जटासंबन्धतावच्छेदको दर्शित एव गुरुणा टीकेत्यत्र विवरणवाक्यं टीकाशब्दार्थः गुरुप्रयोजिता तत्सजातीया वाऽनुपूर्वी संबन्धस्तृतीयार्थः स च टीकान्तरव्यावृत्तेरुद्देश्याया अन्वयितावच्छेदको भवत्येवेति कुरुणा क्षेत्रमित्यत्र कुरोः स्वकृष्टक्षेत्रपरमाणुभिरारब्धत्वं संबन्धस्तृतीयार्थः स च क्षेत्रान्तरव्यावृत्तेरुद्देश्याया अन्वयितावच्छेदको भवत्येवेति दण्डेन पुरुषमानय इत्यत्र दण्डस्य स्वसंयोगप्रागभावनाशस्संबन्धस्तृतीयार्थः स च दण्डसत्त्वासत्त्वदशायामप्यविकल इति गृहीतदण्डपुरुषव्यावृत्तेरुद्देश्याया अन्वयितावच्छेदको भवति न चात्रोपलक्षणतृतीयाया अत्यन्ताभावसंबन्धश्चार्थस्तथा च पुरुषे दण्डात्यन्ताभावो दण्डसंबन्धश्च प्रतीयत इति वाच्यं दर्शितव्यापकानन्तरं दण्डसहितपुरुषानयने दर्शितवाक्यस्याप्रमाण्यप्रसङ्गात्पुरुषे दण्डदण्डात्यन्ताभावासत्त्वात् जटाभिस्तापस इत्यत्र जटाया विद्यमानतया तदत्यन्ताभावस्य तापसे बोधयितुमशक्यत्वाच्च। एवं काशिकायामुदाहृतमपि भवान् कमण्ड-

ऽनुना छात्रसद्राक्षीत् छात्रेणोपाध्यायं शिष्यया परिव्राज-
कमिति तत्राध्ययनशील: छात्रशब्दार्थ: कमण्डलो: स्व-
प्रयोज्याचमनसजातीयमध्ययनपूर्वाङ्गाचमनं संबन्धस्तृ-
तीयार्थ: "पीत्वाऽपोऽध्ययनमारभेत" इति स्मृतेराचमनमध्य-
यनपूर्वाङ्गं भवति तथाविधाचमनमञ्छात्रव्यावृत्तेरन्वयि-
तावच्छेदकं भवत्येव न हि संबन्धस्य तृतीयार्थतावच्छेद-
करूपेणैवान्वयितावच्छेदकं किं तु यथैव स्वबुद्धावभासित-
प्रकारकं तेन रूपेण अत एव कारकप्रयोज्यो गुणत्वेनोक्त-
गुणत्वस्य तृतीयार्थत्वेऽप्युक्त गुणत्वत्वेनैवान्वयितावच्छेदकत्वं
छात्रस्य स्वाध्ययनप्रयोजकमध्यापनं संबन्धस्तृतीयार्थ:
अध्यापनं वाक्यविशेष: उपाध्यायोऽध्यापनयोग्य: योग्यत्वं
तु अध्यापनवाक्यतदर्थगोचरदृढसंस्कारवत्त्वे सति व-
क्तृत्वं वक्तृत्वोपादानादवगतशास्त्रार्थस्य मूकस्य व्युदास:
एवमध्यापनमुपाध्यायान्यव्यावृत्तेरन्वयितावच्छेदकं भ-
वत्येव शिखायास्तत्संयोगस्य वा विहितो ध्वंस: संबन्ध-
स्तृतीयार्थ: विहितशिखाध्वंस: परिव्राजकाच्चतुर्थाश्रमि-
णोऽन्यस्य व्यावृत्तेरन्वयितावच्छेदको भवति विहितत्वो-
पादानाद्यवने शिखाध्वंसस्य सत्त्वेऽपि नावच्छेदकत्वहा-
नि: । यदि च सौगतपरिव्राजको लक्ष्यस्तदाविहितभि-
क्षाशील: परिव्राजकशब्दार्थ: विहितत्वं तु कालान्तर-
भाविफलसाधनताबोधकविधिवाक्यविषयत्वं तादृशवि-
धिवाक्यं वेद: सौगतागमश्च तथासति विहितशिखाध्वं-
स: सशिखस्य विहितभिक्षाशीलस्य ब्रह्मचर्यादेर्व्यावृत्ते र-
न्वयितावच्छेदको भवतीति प्राचीनमतानुसारी पन्था:
वस्तुतस्तु गुरुणा करुणा शिखयेत्यत्र दर्शित एवार्थ: का-

केन देवदत्तगृहा इत्यत्र समासेन गृहे देवदत्तस्वत्वस्य बोधने तच्छून्यगृहव्यावृत्तिप्रतीतेस्तत एव सम्भवात् तृतीयान्तस्य वैयर्थ्यमेव काकेन गृहा देवदत्तस्येत्यत्र काकस्य गृहे अन्तःप्रवेशप्रागभावनाशः संबन्धस्तृतीयार्थः स च काके प्रविष्टेऽन्यत्र गते चाविकल इति अन्तरप्रविष्टकाकस्य गृहस्य व्यावृत्तेरन्वयितावच्छेदको भवति सा व्यावृत्तिः समनियताभावानामैक्ये स्वरूपभेदेऽपि लिङ्गतया देवदत्तस्वत्वशून्यगृहव्यावृत्तिं गमयति कमण्डलुना जटाभिरित्यत्र स्वसंयोगप्रागभावनाशः संबन्धस्तृतीयार्थः स च तयोः सत्त्वासत्त्वदशायामविकल इति । अधृतकमण्डलोश्छात्रस्याधृतजटस्य तापसस्य व्यावृत्तेर्यथायोग्यमन्वयितावच्छेदको भवति अत एव इह न भवति कमण्डलुपाणिश्छात्र इति लक्षणस्य समासान्तर्भूतत्वादिति काशिका समासे तृतीया निषेधिका संगच्छते लक्षणं संबन्धः स च नाचमनरूपः पाणौ कमण्डलोः सम्भवतीति न समासेन बोधयितुं शक्य इति तृतीयानिषेधानुपपत्तिः दर्शितसंबन्धस्तु कमण्डलोः पाणौ सम्भवतीति समासेन बोधित इति तृतीयानिषेधोपपत्तिरुक्तार्थानामप्रयोग इति न्यायादिति । छात्रेणेत्यत्र छात्रस्य स्वाध्ययने छात्रप्रयोज्यनिवासप्रागभावनाशाधिकरणदेशाधिष्ठातृत्वमुपाध्याये संबन्धस्तृतीयार्थः स च छात्रनिवाससत्त्वासत्त्वदशायामविकल इति अच्छात्रस्य छात्राकृतनिवासदेशाधिष्ठातुरुपाध्यायस्य व्यावृत्तेरन्वयितावच्छेदको भवति एवमनया रीत्याऽन्यत्रापि सुधीभिरूह्यः संबन्ध इति । यत्तु वैशिष्ट्यं तृतीयार्थः यस्य वै-

शिष्टं विद्यमानतया प्रतीयते तद्विशेषणं यस्याविद्य-मानतया तत्तूपलक्षणमिति तन्न अविद्यमानस्य वैशि-ष्ट्यस्य तृतीयाश्रवणेनापि बोधयितुमशक्यत्वात् योग्य-ताविरहात् श्यामेन घट इत्यत्र वैशिष्ट्यस्य समवायस्य रक्ततादशायामपि विद्यमानत्वात् श्यामस्योपलक्षणत्वा-नुपपत्तेः जटाभिस्तापस इत्यत्र तत्संबन्धस्य विद्यमानत्वा-दुपलक्षणत्वानुपपत्तेः यदपि संबन्धमात्रं तृतीयाऽर्थः सं-बन्धो यस्य विद्यमानस्य प्रतीयते तद्विशेषणं यस्याविद्य-मानस्य तत्र मतुबादेर्बोधात्तृतीयैवेति तदुपलक्षणमिति तदपि न सुन्दरं घटो विनाशीत्यत्राविद्यमानस्य नाशस्ये-न्प्रत्ययेन संबन्धबोधनात् न चात्र प्रत्ययस्याधुत्वार्थः धात्व-र्थो नाशः जानातीत्यादाविव प्रथमान्तार्थे साक्षादेवान्व-यीति वाच्यं तथासति विनाशी न स्यादित्यत्र नञन्वयबो-धानुपपत्तेः भाविस्थितिकर्तृत्वाभावस्य विनाशे बोधयि-तुमशक्यत्वात् किं चोत्पत्तिकालिको घटो गन्धवानित्यत्रा-विद्यमानस्य गन्धस्य संबन्धो मतुपा बोध्यते तदनुपपत्तिः जटाभिस्तापस इत्यत्र विद्यमानाया जटायास्तृतीयया संबन्धबोधने उपलक्षणत्वानुपपत्तिश्च श्यामेन घट इत्यत्र श्यामस्य स्वप्रागभावनाशः संबन्धः स चाजातश्यामघ-टव्यावृत्तेरन्वयितावच्छेदको भवति घटेनाभाव इत्यत्र घटस्य स्वप्रतियोगितानिरूपितानुयोगित्वं संबन्धस्तृती-यार्थः स च घटाप्रतियोगिकाभावव्यावृत्तेरन्वयिताव-च्छेदको भवति । न चात्र दर्शितसंबन्धेन घट एवा-न्वयितावच्छेदकोऽस्त्विति वाच्यं घटस्यातीतत्वेऽपि व्या-वृत्तिबुद्धेरुदयादिति ।

कलङ्कितगभेण कण्ठेनाघूर्णितेक्षणः ।
पारावतः परिक्रम्य रिरंसुश्चुम्बति प्रियाम् ॥

इत्यत्र तृतीयार्थं आधेयत्वं तथाविधकण्ठे समवेते पारावते परिभ्रमणोत्तरप्रियाचुम्बनकर्तृत्वान्वय इति आधेयत्वे तृतीया "प्रकृत्यादिभ्य" इति वार्त्तिकसिद्धेति हेतुत्वार्थिकां तृतीयां ज्ञापयति "हेतौ" इति सूत्रं हेतार्वर्थे तृतीया स्यादित्यर्थकं हेताविति भावप्रधानो निर्देशः तथा च हेतुत्वं तृतीयार्थस्तच्च द्विविधं कारणत्वं ज्ञापकत्वं च कारणत्वं च साक्षात्परम्परासंबन्धावच्छिन्नं द्विविधं तत्र साक्षाद्यथा तन्तुभिस्तन्तूनां मिलनेन वा पटः पाकेन सौरभं माधुर्यं रक्तिमा वा चोरस्येति परम्परया यथा दण्डेन घटः वह्निना धूमः ओदनेन तृप्तिः यागेन स्वर्गः अनुभवेन स्मरणं चेति अत्र प्रकृत्यर्थस्याधेयतया तृतीयार्थे हेतुत्वे तस्य निरूपकतया कार्ये पटादावन्वयः तथा च तन्तुवृत्तिकारणतानिरूपको घट इत्याकारकोऽन्वयबोधः यदत्र निर्व्यापारसाधनं हेतुस्तृतीयार्थस्तस्योदाहरणं दण्डेन घट इति शाब्दिकमतं तल्लौकिकपदार्थानामप्यनभिज्ञानं सूचयति चक्रभ्रमिद्वारैव दण्डो घटोत्पादक इति सकललोकावधारणविरोधादिति । ज्ञापकत्वं यथा धूमेन वह्निरित्यादि अत्रापि प्रकृत्यर्थस्याधेयतया तृतीयार्थे ज्ञापकत्वे तस्य निरूपकतया ज्ञाप्ये वह्न्यादावन्वयः तथा च धूमवृत्तिज्ञापकतानिरूपको वह्निरित्यन्वयबोधः । मणिकृतस्तु ज्ञापकत्वं न तृतीयार्थः तथासति चक्षुषा रूपमिति प्रयोगप्रसङ्गात् किं तु धूमेन वह्निरित्यत्र धूमपदं धूमज्ञाने वह्निपदं वह्निज्ञाने ज्ञाय-

मानवच्छौ वा लाक्षणिकं तृतीयार्थो हेतुत्वं तस्य निरूपकतया लक्ष्यैकदेशे ज्ञायमानविशेष्यो ज्ञानेऽन्वयः तथा च धूमज्ञानवृत्तिहेतुतानिरूपकज्ञानविषयो वह्निरित्यन्वयबोधः चेष्टाविशेषेण पचतीत्यत्र विशेषणान्तस्य चेष्टाविशेषज्ञाने तिङो ज्ञायमानकृतौ लक्षणा तथा च चेष्टाविशेषज्ञानवृत्तिहेतुतानिरूपकज्ञानविषयः पाककृतिरित्यन्वयबोधः । विभक्त्यर्थयोः परस्परं नान्वय इत्यप्रामाणिकमेव प्रामाणिकं चेत्सुवर्थयोरिव तथात्वं एवमन्यत्रापि ज्ञाने लक्षणा यथा प्रत्यक्षोपजीवकत्वेन निरूप्यते इत्यादौ त्वप्रत्ययस्य प्रत्यक्षोपजीवकत्वज्ञाने लक्षणा लक्ष्यमाधेयत्वेन तृतीयार्थहेतुत्वे तच्च निरूपकतया निरूपणेऽन्वेति प्रत्यक्षोपजीवकत्वसङ्गतिज्ञानं तज्जिज्ञासाया जिज्ञासाविषयाया वा प्रयोजकतया निरूपणजनकम् एवं वेदेन प्रवर्तते इत्यत्र वेदपदस्य वेदज्ञाने लक्षणा वेदज्ञानस्य वेदार्थे इष्टसाधनत्वगोचरज्ञानप्रयोजकतया प्रवृत्तिजनकत्वमित्याहुः । एकदेशिनस्तु न जनकत्वं न वा ज्ञापकत्वं तृतीयार्थस्तथासति घटो न रासभेनेतिवत् घटो न दण्डेनेति प्रयोगप्रसङ्गात् स्वरूपसंबन्धावच्छिन्नप्रतियोगिताकस्य दण्डहेतुत्वाभावस्य घटेऽपि सत्त्वात् निरूपकतासंबन्धस्य वृत्त्यनियामकतया प्रतियोगितानवच्छेदकत्वादिति जन्यत्वं ज्ञाप्यत्वं च तृतीयार्थ इत्याहुः तच्चिन्त्यं वृत्तिनियामकसंबन्धस्य प्रतियोगितानवच्छेदकत्वे युक्तेर्द्वितीयाविवरणे दर्शितत्वात् अन्यथा प्रकृतेऽपि घटो न पारिमाण्डल्येनेत्यत्रान्वयबोधानुपपत्तेः पारिमाण्डल्यजन्यत्वस्या-

प्रसिद्धतया तदभावबोधासम्भवात् वृत्तिनियामकस्य त-
थात्वे तु तृतीयार्थे हेतुत्वे आधेयतया जन्यत्वे निरूप-
कतया संबन्धेन प्रकृत्यर्थाभावस्य नञा बोधनसम्भवाद-
न्वयबोधोपपत्तिः गगनं न पारिमाण्डल्येनेत्यादिवाक्यम-
योग्यमेव योग्यं चेत्तदा नञा द्वेधा ऽभावो बोध्यते अतः
प्रकृत्यर्थाभावविशिष्टजन्यत्वस्याभावो गगने प्रतीयते ग-
गनमन्धो न पश्यतीत्यत्र द्वेधा नञर्थबोधवत् वस्तुतस्तु
हेताविति सूत्रे हेतुपदेन हेतुत्वस्य प्रतिपादनाद् हेतुत्वं
तृतीयाऽर्थः न हि हेतुपदस्य ज्ञाप्यं ज्ञापकं वा शक्यं येन
तत्त्वं प्रतीयेत सूत्रे लक्षणाकल्पने प्रयोजनविरहः को-
शादिज्ञापकाभावेन रूढिविरहस्य परिपन्थी धूमेन व-
न्हिरित्यादिप्रयोगो न वृत्तिग्रन्थादौ दृष्टचर इति का-
शिकायां धनेन कुलं कन्यया शोकः विद्यया यश इत्यु-
दाहृतं तत्र कुलस्य सन्तानस्य हेतुत्वं धनस्य दारपरि-
ग्रहादिप्रयोजकतया कन्यायाः शोकहेतुत्वं विश्लेषप्रयो-
जकदानप्रयोजकतया विद्याया यशोहेतुत्वमध्यापना-
दिप्रयोजकतया बोध्यमिति फलमपीह हेतुः फलं कार्यं
तथा च तृतीयार्थे हेतुत्वे यथाऽऽधेयतया तथा निरूपक-
तया ऽपि प्रकृत्यर्थस्यान्वयः कार्यस्य हेतुतानिरूपकत्वात्
अथ वा तृतीयार्थे जन्यत्वे यथा निरूपकतया तथाऽऽधेय-
तयाऽपि प्रकृत्यर्थस्यान्वयः कार्यस्याधिकरणत्वात् फलं
हेतुर्यथाऽध्ययनेन वसतीत्यत्राध्ययननिरूपितहेतुताको-
ऽध्ययनजन्यतानिरूपको वा वासो वाक्यार्थः ।"अलं महो-
पाल तव श्रमेण"इत्यत्र फलोद्देश्यककृतिविषयः फलाजन-
कोऽलंपदार्थः निष्फलस्य कृतिविषयस्य श्रमजनकत्वं

निराबाधमिति अनजन्यतानिरूपकत्वमत्रपदार्थेऽन्वेति अ-
तः फलहेतुताया नामार्थान्वयात्र कारकत्वमिति एवं
दुःखेनाधीतं दुःखेनार्जितं दुःखेन विद्या दुःखेन धनं य-
शेन यदुपार्जितमित्यत्र फलहेतुत्वान्वयोऽनया रीत्या
बोध्यः निर्वाणेन सुगतमुपास्ते जाल्म इत्यत्र निर्वाणप-
देस्य ल्युट्प्रत्ययस्य वा निर्वाणज्ञाने लक्षणा तस्य फ-
लेच्छाचिकीर्षाप्रवृत्तिप्रयोजकतया सुगतोपासनजनक-
त्वं प्रत्यक्षोपजीवकत्वज्ञानस्य निरूपणजनकत्ववदिति
नात्र फलहेतुत्वमिति । फलवाचकस्य हेतुपदसामाना-
धिकरण्ये षष्ठीं ज्ञापयति । "षष्ठी हेतुप्रयोगे" इति सूत्र
हेतुपदप्रयोगे षष्ठीविभक्तिर्भवतीत्यर्थकं तृतीयाऽपवादः
हेतुशब्दस्य हेतुतानिरूपको जन्यताऽऽश्रयो वाऽर्थः षष्ठ्या
हेतुत्वं जन्यत्वं वाऽर्थः हेतुशब्दप्रयोगे षष्ठी यथाऽध्ययन-
स्य हेतोर्वसति अत्र हेतोस्तादात्म्यनाध्ययने तस्य षष्ठ्यर्थे
तस्य वासेऽन्वयः तथा च हेतुतानिरूपकाभिन्नाध्ययन-
निरूपितहेतुताश्रयो हेतुतानिरूपकाध्ययननिष्ठजन्यता-
निरूपको वा वासो वाक्यार्थः एवमन्नस्य हेतोर्हुतस्य
हेतोर्वा वसतीत्यादावप्यन्वयो बोध्यः हेतुपदसामाना-
धिकरण्यं कर्मधारयेऽपि भवति सूत्रे प्रयोगशब्दस्य सा-
मानाधिकरण्यार्थकत्वात् तथा चाध्ययनहेतोर्वसतीत्यपि
प्रमाणम् अत्राध्ययनस्य तादात्म्येन हेतुपदार्थे हेतुतानि-
रूपके तस्य निरूप्यतया षष्ठ्यर्थे हेतुत्वे विशेष्यविशेषणा-
भाववैचित्र्येणान्वयो ज्ञानवतां ज्ञानमित्यत्रेव निष्प्रत्यूहः
हेतुशब्दसमानाधिकरणसर्वनाम्नस्तृतीयां प्रतिप्रसते । "स-
र्वनाम्नस्तृतीया च" इति सूत्रम् । हेतुशब्दप्रयोगे सर्वनाम्न-

स्तृतीया भवति चकारात्षष्ठ्यपीत्यर्थकम्। तृतीयाषष्ठ्यो-र्हेतुत्वमेवार्थः द्वयौ विभक्तिर्यथा केन हेतुना वसति कस्य हेतोर्वसति अत्र किमः जिज्ञासाप्रकारत्वोपलक्षित-धर्मवानर्थः जिज्ञासा तु अवगतधर्मावान्तरधर्मप्रकारक-ज्ञानेच्छा बोध्या येन हेतुना यस्य हेतोर्वा वसति तद-स्यातिरमणीयमध्ययनं अत्र यच्छब्दस्य समभिव्याहृत-धर्मावान्तरधर्मवानर्थः समभिव्याहृतो धर्मः हेतुत्वं त-दवान्तरो धर्मः अध्ययनं अत एव तच्छब्दस्याध्ययनसा-मानाधिकरण्यं येन वसतीत्यादौ समभिव्याहृतो धातु-रेव समभिव्याहारः सुबन्ततिङन्तपदे बोध्यः धात्वर्थे तृतीयार्थो हेतुत्वं विशेषणतया धर्म एवेति नानुपपत्तिः यदधीते तेन हेतुना तस्य हेतोर्वा वसति अत्राधीतेस्ते-न हेतुना तस्य हेतोर्वा वसति वेत्यादौ तच्छब्दस्य य-च्छब्दार्थान्वितपदान्तरार्थतावच्छेदकत्वोपलक्षितधर्मवा-नर्थः पूर्वबुद्धिप्रकारत्वोपलक्षितधर्मवान्वाऽर्थः एवं हेतुश-ब्दार्थस्य सर्वनामार्थे तस्य तृतीयार्थे षष्ठ्यर्थे वा हेतुत्वे तस्य धात्वर्थेऽन्वयः पूर्वोक्तरीत्या बोध्यः। निमित्तकारण-हेतुषु सर्वासां प्रायदर्शनमिति वार्त्तिकम्। निमित्तादि-शब्दप्रयोगे सर्वनाम्नः सर्वा विभक्तयो भवन्तीत्यर्थकं तेन किं निमित्तं केन निमित्तेन कस्मै निमित्ताय कस्य नि-मित्तस्य कस्मिन् निमित्ते वा वसतीत्यत्र विभक्तीनां हे-तुत्वमर्थोऽन्वयः पूर्ववत् एवं कारणादिशब्दप्रयोगे बोध्यं कारणादुपादानं पर्यायग्रहणार्थं तेन किं प्रयोजनं केन प्रयोजनेन वा वसतीत्यादि बोध्यम्। अर्थान्तरे तृ-तीयां ज्ञापयति। "प्रसितोत्सुकाभ्यां तृतीया च" इति

सूत्रम् । प्रसितोत्सुकाभ्यां योगे तृतीया भवति च-कारात्सप्तम्यपीत्यर्थकम् । प्रसित उत्सुको वा हरिणा प्रसित उत्सुको वा हरौ प्रसितः प्रसक्त आसक्तः लग्न-वानिति यावत् लग्नो धारापन्नं ज्ञानं तादृशवान् वा उत्सुक उत्कण्ठावान् उत्कण्ठा इच्छा एवं तृतीयास-प्तम्योर्विषयत्वमर्थस्तस्य प्रतियोगितया लग्ने उत्कण्ठायां चान्वयस्तथा च हरिविषयत्वप्रतियोगिलग्नवान् हरि-विषयताप्रतियोग्युत्कण्ठावानिति शाब्दबोधः एवं के-शैः केशेषु वा प्रसितः केशैः केशेषु वा उत्सुकः इति काशिकोदाहरणे अनया रीत्यान्वयो बोध्यः । पुनर-र्थान्तरे तृतीयां ज्ञापयति । "नक्षत्रे च लुपि" इति सूत्रम् लुप्तत्रद्धितान्तार्थे वर्तमानात् नक्षत्रनिमित्तकालवाचकात्तृ-तीयासप्तम्यौ भवत इत्यर्थकं विशेषार्थकाद् दृश्युत्यादिश-ब्दात् तद्धितार्थो युक्तः कालोऽर्थः तद्धितस्य लोपो लुमक्षा-तेनाश्विन्यादिशब्दस्य निरूढलक्षणया साऽश्विनीयुक्तः कालः प्रतीयते । एवं पुष्येण पुष्ये वा पायसमश्नीयात् पु-ष्येण पुष्ये वा क्षौरमस्य इत्यत्र पुष्यपदस्य पुष्ययुक्तः का-लोऽर्थः तृतीयासप्तम्योरुत्पत्तिरर्थः पुष्ययुक्तकालोत्पत्ति-कत्वं पायसभोजने क्षौरे चान्वेति । एवं "मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेदि" त्यत्रावाहनमधिष्ठानफलको व्यापारः अधिष्ठानं संबन्धः स च संयोगादिलक्षणस्त्रिवो संबन्धाभावलक्षणस्त्रिवोऽनधिष्ठान तत्फलको व्यापारो वि-सर्जनं मूलयुक्तकालोत्पत्तिकत्वम् आवाहने श्रवणयुक्तका-लोत्पत्तिकत्वं विसर्जनेऽन्वेति अत्र साधुनिपुणेति सूत्रा-दनुवर्तमानतया सप्तम्या अधिकरणार्थकत्वं निर्युक्तिकं

न च तथासति साधुनिपुणसूत्रप्रतिपादितार्थो सप्तमी-तृतीययोरर्थोऽस्त्विति वाच्यम् । तथासति केशैः केशेषु वा पुष्येण पुष्ये वेति दर्शितोदाहरणेऽर्थाबाधात्सप्तम्याद्यर्थानन्वयप्रसङ्गात् तस्मादन्तराअन्तरेणयुक्ते इति सूत्रमिव प्रकृतसूत्रद्वयमपि विभक्तेर्विधायकं न तु तदर्थ-प्रतिपादकमिति न वाऽधिकरणार्थकत्वं सप्तम्याः सम्भवति तथासति कृत्तिकादिकृते चौरेऽपि पुष्येण पुष्ये वा चौरमस्येति प्रयोगप्रसङ्गात् चौरस्य क्षुरजन्यकेशनाशस्य कृत्तिकाकृतस्य पुष्येऽपि प्रवृत्तेरिति। सदृशशब्दादियोगे तृतीयां ज्ञापयति । "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्य-तरस्याम्" इति सूत्रं तुल्यार्थैः शब्दैर्योगे तृतीया षष्ठी च भवतीत्यर्थकं चन्द्रेण चन्द्रस्य वा तुल्यं मुखमित्यादौ-साहृश्याश्रयः तुल्यशब्दार्थः साहृश्यान्वयिप्रतियोगित्वं तृतीयाषष्ठ्योरर्थस्तत्र यदि साहृश्यमतिरिक्तः पदार्थस्त-दा तत्प्रतियोगित्वमपि तथेति चन्द्रप्रतियोगिताकसा-हृश्याश्रयो मुखमित्यन्वयबोधः यदि च वृत्तिमद्धर्मो भे-दश्च द्वयं साहृश्यं तदा वृत्त्यन्वयिनिरूपकत्वस्वरूपं प्रति-योगित्वं प्रतियोगितानिरूपिताऽनुयोगिता च द्वयं तृ-तीयाषष्ठ्योरर्थः तथा च चन्द्रप्रतियोगितानिरूपिताऽनु-योगिताकभेदाश्रयः चन्द्रनिरूपकवृत्तिमद्धर्माश्रयश्च मु-खमित्यन्वयबोधः। प्रतियोग्यनुयोगिभावे तृतीया प्र-कृत्यादिवार्त्तिकसिद्धाऽन्यत्रापि दृश्यते घटेन हीनं शून्यं रहितं वा भूतलमित्यादौ हीनार्थपदार्थैकदेशेऽभावे तृ-तीयाऽर्थः प्रतियोग्यनुयोगिभावोऽन्वेति यत्र भेदाघटित-साहृश्याश्रयस्तुल्यादिपदार्थः मुखेन तुल्यं सुखं तस्या इ-

त्यादौ तत्रापि वृत्त्यन्वयिनिरूपकत्वार्थिका तृतीया मु-
खनिरूपकवृत्तिमद्धर्माश्रयो मुखमित्यन्वयबोधः तुल्यप-
दस्य भेदांशपरीहारेण सधर्ममात्रे लक्षणायाः प्रयोजनं
मुखं निरुपममितिबोधः । स मानसः वैयञ्जनिकः शाब्दो
वेत्यन्यदेतत् । सूत्रे अतुलोपमाभ्यामिति तुलोपमाश-
ब्दाभ्यां योगे तृतीया न भवतीत्यर्थकं तेन चन्द्रेण तुलो-
पमा वेति न प्रयोगः ननु"तुलां यदाऽऽरोहति दन्तवा-
ससे"ति"स्फुटोपमं भूतिसितेन शम्भुने"ति च कथं तर्हि
प्रयोग इति चेत् दन्तवाससेति करणतृतीया तुलाया-
मारोहणं तुलाप्रकारकज्ञानमेव तत्र दन्तवाससो ज्ञानं
व्यापारो जन्यतयाऽन्वेति प्रतियोगिज्ञानं विना सादृ-
श्यबुद्धेरसम्भवात् दन्तवाससो ज्ञानजन्यतुलाप्रकारक-
ज्ञानं वाक्यार्थः शम्भुनेति हेतुतृतीया स्फुटशब्दार्थोऽभि-
व्यक्तस्तत्राभिव्यक्तौ शम्भुहेतुकत्वमन्वेति तथा च शम्भुहे-
तुकाभिव्यक्तिमदभिन्नोपमाऽऽश्रयाभिन्नं नारदमित्यन्वय-
बोधः शम्भोः प्रतियोगिनो ज्ञानद्वारोपमाऽभिव्यक्तिहेतु-
त्वं सूत्रेऽतुलेत्यादिना प्रतियोगित्वार्थकतृतीयाया एव
निषेधः तुल्यशब्दपर्यायाः सदृशसंनिभसमानादयः श-
ब्दाः एषां योगे तृतीयां ज्ञापयितुं सूत्रेऽर्थग्रहणम । के
चित्तु चन्द्रेण सहोपमीयते तुल्यते इत्यादौ सहार्थस्त-
दीयत्वादिः समानकालिकत्वादेरसम्भवात् अत एव"त-
दुत्तमाङ्गजैः समं चमर्यैव तुलाभिलाषिणे"इति श्रीहर्षः
एवं चैत्रेण सह संयुज्यते संवेति वेत्यत्र निरूपकत्वं
सहार्थः निर्वैरेण सह वैरायते निर्मत्सरेण सह स्पर्धते
इत्यादौ विषयविषयिभावः सहार्थः सहयुक्ते तृतीयासा-

धुत्वार्थिकेत्याहुः । तन्न विचारसहं सहयुक्ततृतीयाया निरर्थकत्वे पुत्रेण सहागच्छतीत्यत्र पूर्वकात्त्वान्वया-मप्रसङ्गात् न च दर्शितस्थले तृतीया निरर्थिकेति वाच्यं त-त्रापि सार्थकत्वात् तथा हि चन्द्रेण सहेत्यत्र तृतीयार्थं आधेयत्वं सहार्थोऽभेदस्तैत्रेणेत्यत्रापि तथैव निर्वैरेणेत्य-त्र तृतीयाऽर्थ एव विषयविषयिभावः सहार्थो ऽभेद एव सहपदं विना क्रियायां यत्कारकार्थिकविभक्तिर्यत्पदा-दुच्यते सह योगे तत्कारकार्थिका वा तृतीया तत्पदा-द्भवति सहार्थविशेषणक्रिया साकाङ्क्षेति सहयुक्तसूत्रस्या-र्थ इति निर्वैराय वैरायत इति सहशून्यप्रयोगे चतुर्थ्या विषयविषयिभावोऽर्थ इति सहयुक्ततृतीयायाः स एवा-र्थः एवं ग्रामेण सह गृहं गच्छतीत्यत्र सहपदं विना ग्रा-मपदाद् द्वितीयैवेत्यतः सहयुक्ते कर्मत्वार्थिकात् तृतीयेति चन्द्रेणेत्यत्राधेयत्वं कर्मत्वं प्रधाने कर्मतिङ्योगात् चै-त्रेणेत्यत्र कर्तृत्वं कर्तृतिङ्योगात् विषयत्वं संप्रदानत्व-मिति दर्शितस्थलेऽन्वयः स्वयमूहनीयः । मासेन यजते दर्शेन पौर्णमासेन वेत्यादौ मासदस्य मासनाशोऽर्थः तस्य कालविधयाऽङ्गत्वेन प्रयोजकतया यागहेतुत्वमिति मा-सेनेति हेतुतृतीया अथवा प्रकृत्यादिवार्त्तिकेनाधेयत्वा-र्थिकात्तृतीयेति ।

इति विभक्त्यर्थनिर्णये कारकतृतीयाऽर्थनिर्णयः ।

इति तृतीयाविवरणं समाप्तम् ।

अथ चतुर्थी ।

ङेभ्याम्भ्यसिति त्रयः प्रत्ययाः । तत्र गुरवे ददाती-
त्यादौ श्रूयमाणत्वादेकारस्य तत्त्वेन भ्यामस्य भ्या-
म्त्वेन भ्यसो भ्यस्त्वेन शक्यत्वम् । ङकारोऽनुबन्धः क्व-
चिदप्यश्रूयमाणत्वान्न वाचकताकुक्षिप्रविष्ट इति अनु-
शासनसिद्धाश्चतुर्थ्या अर्थाः अनुशासनं च "चतुर्थी संप्र-
दाने" इति । तत्र संप्रदानं संप्रदानत्वं वार्थ इति वच्य-
ते । अत्राप्यनभिहिते इत्यधिकारस्तेन दानीयो ब्राह्मण
इत्यादौ न चतुर्थी । संप्रदानपदसंकेतग्राहकं सूत्रम् ।
"कर्मणा यमभिप्रैति स संप्रदानमि" ति । कर्मणा क-
रणभूतेन कर्ता यमर्थमभिप्रैति तत्कारकं संप्रदानसंज्ञं
भवतीत्यर्थकम । कर्मणा धात्वर्थफलवता गवादिना स्वा-
मित्वेनोपाध्यायादेरभिप्रायविषयीकरणात् उपाध्याया-
देः संप्रदानत्वं निरपवादमित्युपाध्यायाय गां ददातीत्यु-
पपद्यते । "क्रियाग्रहणमपि कर्तव्यमि" ति वार्त्तिकम् ।
क्रियया ऽपि यमभिप्रैति स संप्रदानमित्यर्थकं क्रियापदं
चात्र क्रियाप्रयोज्यफलपरं फलं च धात्वर्थभिन्नं बोध्यम् अत
एव श्राद्धाय निगर्हते युद्धाय संनह्यते इत्युपपद्यते । अत्र
निगर्हतेर्गर्हामात्रमर्थः प्रयोज्यफलं विषयत्वं संनह्यतेः
संनाहः सज्जीभाव एवार्थः प्रयोज्यफलं युद्धे प्रवृत्तिः वि-
रहाविषयत्वं श्राद्धे संनहनानन्तरप्रवृत्तिर्युद्धे इति श्राद्ध-
युद्धयोः संप्रदानत्वमिति सूत्रे धात्वर्थफलवतः कर्म-
णः संबन्धितया संप्रदानत्वं वार्त्तिके धात्वर्थान्यफ-
लसंबन्धितया संप्रदानत्वमिति सूत्रवार्त्तिकयोर्नैकत-
रवैयर्थ्यं वस्तुतस्तु सूत्रे कर्मपदं क्रियापरं क्रिया च

फलव्यापारोभयरूपा व्यापारमात्ररूपा च बोध्या ।
तत्र धात्वर्थफलसंबन्धितया धात्वर्थान्यफलेन संबन्धेन
व्यापारसंबन्धितया चाभिप्रायविषयत्वं संप्रदानत्वमिति ।
अत एव पत्ये शेते प्रौढवधूरित्यत्र पतिप्रीतिः शयनफलं
प्रीत्या संबन्धेन शयनसंबन्धितयाऽभिप्रायविषयत्वं पत्युः
संप्रदानत्वमिति तत्रेदृशं संप्रदानत्वं न चतुर्थ्यर्थः व्यापा-
रादीनामन्यलभ्यत्वात् किं त्वन्यादृशमेव तथा हि वि-
प्राय गां ददातीत्यत्र ददातेः स्वत्वध्वंसानुकूलो व्यापा-
रोऽर्थः उत्सर्गेऽपि ददातिसुख्य एव अत एव गोमिथुनमा-
दाय कन्यां ददाति पितेति दीनारमादाय मौक्तिकं
ददाति वणिगिति विक्रियेऽपि ददाति प्रयोगः व्यापा-
रस्त्यागः स च न ममेत्याकार उपेक्षासाधारणेन रूपेण
स्वत्वनाशं प्रति जनको न स्वत्वं प्रति प्रमाणाभावात् ।

सप्त वित्तागमा धर्म्या लाभो दायः क्रयो जयः ।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च ॥

इत्यत्र "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदि"
त्यत्र च प्रतिग्रहस्यैव स्वत्वोपायत्वेनाभिधानात् प्र-
तिग्रहोऽपीदं ममेत्याकारोऽनुमितिस्वरूपः समि-
त्कुशाद्युपादानसाधारणेन रूपेण स्वत्वं प्रति जनक-
स्तत्पुरुषीयत्वं प्रति तत्पुरुषस्वीकारस्य विशेष्यतया
हेतुत्वात् तथा च स्वत्वमात्रं चतुर्थ्यर्थस्तत्र प्रकृत्य-
र्थस्य निरूपकतया स्वत्वस्य जनकतया स्वत्वध्वंसे-
ऽन्वयाद्विप्राय गां ददाति राजेत्यत्र विप्रनिरूपितस्वत्व-
जनकगोनिष्ठस्वत्वध्वंसजनकत्यागाश्रयो राजेत्यन्वयबो-
धः व्यधिकरणस्वत्वं प्रति गोनिष्ठस्वत्वध्वंसस्याजनक-

त्वात् स्वत्वे गोष्टत्तित्वमपीष्यते तेन पुत्रस्य गाप्य-
कामनया गवि पुत्राय गां ददातीति न प्रयोगः इति
वदन्ति । तन्न विचारसहं स्वत्वध्वंसानुकूलव्यापारस्य
ददात्यर्थत्वे उपेक्षायामपि ददाति प्रयोगापत्तेः प्रतिग्रह-
स्य समित्कुशाद्युपादानमात्रात्मेन रूपेण स्वत्वजनक-
त्वे अन्योद्देशेन त्यक्तेऽन्यस्योपादाने स्वत्वोत्पत्तिप्रसङ्गात् उ-
पादानमात्रस्य स्वत्वजनकत्वे नास्तिकहिरण्यादावप्युपा-
दानमात्रे स्वत्वोत्पत्तिप्रसङ्गात् तस्माद्दानमेव स्वत्वकार-
णम् । अत एवान्योद्देशेन त्यक्तेऽन्यस्योपादाने न स्वत्वप्र-
सङ्गः वचने प्रतिग्रहस्य गणनं दानोपलक्षकमेव उपा-
दानेन स्वत्वे जननीये समित्कुशादीनां तादात्म्यमिव
दानमपि विशेषसहकारि तथा च तत्प्रकारीयस्वत्वप्र-
कारतानिरूपितविशेष्यतासंसर्गेण त्यागस्तत्पुरुषस्वत्वं
प्रति कारणं स्वत्वध्वंसो व्यापारः स्वत्वजनकत्यागो द-
दात्यर्थस्तत्र ब्राह्मणाय गां ददातीत्यत्र निरूपकत्वं स्वा-
मित्वं वा चतुर्थ्यर्थः ब्राह्मणनिरूपितस्य ब्राह्मणनिष्ठस्वा-
मित्वनिरूपितस्य वा स्वत्वस्य स्वत्वध्वंसव्यापारेण जन-
कस्त्यागो वाक्यार्थः अथ वा स्वत्वोद्देश्यकस्त्यागो ददा-
त्यर्थः चतुर्थ्याः पूर्वोक्त एवार्थः अत एव संप्रदानास्वीकृ-
तस्याप्युत्सर्गे स्वत्वानुपहिते च ददातिप्रयोगोऽप्युपपद्यते
यत्तु उत्सर्गेण समनन्तरमेव संप्रदानस्वत्वं जन्यते न चै-
वमस्वीकृतेऽपि संप्रदानस्वत्वापत्तिरिति वाच्यम् । दानेन
स्वत्वजनने वैमत्यस्य प्रतिबन्धकत्वात् अस्वीकृते तत्स-
त्त्वात् अत एव तदुद्देशेनोत्सृष्टे तस्मिन्प्रतिगृह्यैव मृते
तत्पुत्रादीनां स्वत्वोत्पत्तिरुपपद्यते तद्व्यक्तिमरणजन्यस्व-

त्वध्वंसद्वारेण तद्व्यक्तिमरणस्य वा तत्पुत्रस्वत्वं प्रति ज-नकत्वात् एवमपुत्रव्यक्तिमरणजन्यस्वत्वध्वंसस्य तत्पत्नी-स्वत्वं प्रति जनकत्वम् "अपुत्रस्य धनं पत्न्यभिगामी"ति विष्णुस्मरणात्। ऋतुमवेक्ष्य मृते पितरि जातमपि स्त्री-स्वत्वं पुत्रोत्पत्त्या नाश्यते स्वजन्मजनितमातृस्वत्वनाशः मातृस्वत्वनाशद्वारेण स्वजन्म वा स्वस्वत्वं प्रति कारणं पुत्रोत्पत्तिपूर्वं माता विक्रीते न पुत्रस्वत्वं जन्मजनित-मातृस्वत्वनाशविरहादित्थं च व्युत्सर्गेणाव्यवधानेन पुं-सो व्यवहितस्यापि स्वत्वं जन्यत इति मतं तन्न एव-मपि मृतं प्रोषितं वोद्दिश्य त्यक्ते तत्पुत्रस्य स्वत्वानुत्पा-दप्रसङ्गात् उत्सर्गे व्यवस्थान्तरस्यावश्यमाश्रयणीयत्वात्। अन्यथा ब्राह्मणमात्रमुद्दिश्य त्यक्ते तुलापुरुषादौ ब्राह्म-णसामान्यस्वत्वप्रसङ्गात् परस्वे दातुर्विभज्य वितरणेऽन-धिकारप्रसङ्गाच्च तस्मादुत्सर्गेण स्वत्वे जननीये प्रतिपा-दनं सहकारीति नाव्यवहितमेव स्वत्वोत्पत्तिरिति इ-त्थं च स्वत्वनिरूपकत्वं संप्रदानत्वं तत्र स्वत्वं ददात्य-र्थान्तर्गतं निरूपकत्वं चतुर्थ्यर्थ इत्येवं संप्रदानमित्यन्व-र्थसंज्ञा अत एव संप्रदानमित्यन्वर्थसंज्ञाबलाद्दानस्य क-र्मणेति विज्ञायत इति काशिकावृत्तिरिति प्राञ्चः। व-स्तुतस्तु स्वत्वध्वंसजनकः स्वत्वोद्देश्यकस्त्यागो ददा-त्यर्थः स च त्यागो नेदं मम किं त्वस्य स्यादित्याका-रस्तादृशत्यागरूपेच्छाविषयत्वं संप्रदानत्वमत एव सूत्रे-ऽभिप्रैतीत्यत्र दानस्य कर्मणेतिशेषपूरणं विषयत्व-मुद्देश्यतावच्छेदकत्वं तदेव चतुर्थ्यर्थ इच्छान्वयिब्राह्म-णस्य स्यादित्यत्र षष्ठ्यर्थस्वत्वनिष्ठोद्देश्यताया अवच्छेद-

कत्वस्य ब्राह्मणे सत्त्वात् तत्रोद्देश्यतावच्छेदकतायाः स्वनिरूपितस्वत्वनिष्ठोद्देश्यताप्रतियोगित्वेन संबन्धेन त्यागरूपेच्छायामन्वयस्तत्र लाघवादवच्छेदकत्वमात्रं चतुर्थ्यर्थस्तच्च दर्शितसंबन्धेन त्यागेऽन्वेति। एवं ब्राह्मणाय गां ददाति राजेत्यत्र ब्राह्मणनिष्ठावच्छेदकताकगोवृत्तिस्वत्वनिष्ठोद्देश्यताकस्वत्वध्वंसजनकत्यागाश्रयो राजेत्यन्वयबोधः वार्त्तिकेन तु धात्वर्थान्यफलसंबन्धितया अभिप्रेतत्वं संप्रदानत्वं ज्ञापितं तत्र वृक्षायोदकं सिञ्चतीत्यत्र पुष्टीच्छाप्रयोज्योऽपि वृक्षे सेकः तत्र धात्वर्थे पुष्टिविषयत्वमन्वेति न त्विच्छायामित्यभिप्रायो न चतुर्थ्यर्थोऽभिप्रेतीति स्वरूपकीर्तनमात्रं यद्वि च ज्ञानेच्छे व्यापारतया न धात्वर्थः किं तु तत्प्रयोज्यः प्रयत्नस्तदा वृक्षायेत्यत्र चतुर्थ्यर्थपुष्टिरुद्देश्यतया धात्वर्थे द्रवद्रव्यप्रतियोगिकसंयोगानुकूलव्यापारे प्रयत्नेऽन्वेति पुष्टिरुपचयः स च वृक्षद्रवयवनिष्ठारम्भकसंयोगसामानाधिकरण्यं तथा च वृक्षसंबन्धिपुष्ट्युद्देश्यकः जलवृत्तिद्रवद्रव्यप्रतियोगिकसंयोगानुकूलः प्रयत्नो वाक्यार्थः एवं यदग्नये च प्रजापतये च सायमग्निहोत्रं जुहोतीत्यत्र जुहोत्यर्थे वह्निसंयोगानुकूलप्रक्षेपस्य समानकालिके त्यागेऽनुकूलप्रयत्ने वा चतुर्थ्यर्थस्यान्वयः तथावच्छेदकत्वस्य चतुर्थ्यर्थस्य यत्पदार्थनिष्ठस्वत्वोद्देश्यताद्वारा त्यागेऽन्वयः प्रीतेर्वा चतुर्थ्यर्थस्योद्देश्यतया प्रयत्ने प्रयत्नत्यागैकतरान्वयः विप्रायान्नं निर्वपतीत्यत्र धात्वर्थेऽभिश्रितपात्रप्रक्षेपानुकूले प्रयत्ने विप्रविशेषितस्य चतुर्थ्यर्थस्य भोजनस्योद्देश्यतयाऽन्वयः खण्डिकोपाध्यायः शिष्याय चपेटां ददाती-

स्वत्वाहन्यमानः करस्थपेटार्थः अभिघातफलकप्रयत्नो द-दात्यर्थः तत्र प्रयत्ने चतुर्थ्यर्थस्य व्यथायाः शिष्यविशेषिता-या अन्वयः इत्थं दर्शितानां चतुर्थ्यर्थानां सन्दर्शितेन सं-सर्गेण धात्वर्थ एवान्वय इति कारकत्वं निष्प्रत्यूहमिति शाब्दिकास्तु ददातेः स्वत्वध्वंसः स्वत्वं च फलविधया-ऽर्थः त्यागो व्यापारविधया फलद्वयमेकेन कर्मणा साका-ङ्क्षमिति गवादेः कर्मणस्तत्रान्वयः तेन पुत्रराज्यकामन-या दीयमानायां गवि राज्यं ददातीति न प्रयोगः चतु-र्थी तु धात्वर्थफलान्वयिप्रीत्यादिफलान्तरमभिधत्ते तेन ब्राम्हणाय गां ददातीत्यत्र गोहत्तेः ब्राह्मणप्रीतिजनक-स्वत्वस्य स्वध्वंसस्य चानुकूलस्त्यागो वाक्यार्थः प्रीतिम-जनयत्यपि स्वत्वे यदि ददातीति प्रयोगस्तदा प्रीतीच्छा चतुर्थ्यर्थः सा स्वोद्देश्यप्रीतिजनकत्वेन संबन्धेन धात्व-र्थफले स्वत्वेऽन्वेति प्रीतीच्छायां प्रकृत्यर्थस्य ब्राह्मणादेः प्रीतिनिष्ठविशेष्यतानिरूपितसमवेतत्वनिष्ठप्रकारताव-च्छेदकतया प्रीतिनिष्ठोद्देश्यतावच्छेदकतया संबन्धेना-न्वयः अत एव कर्मणा यमभिप्रैतीति सूत्रेण कर्मफल-गोचराभिप्राय एव चतुर्थ्यर्थतया सूचितः चतुर्थ्यर्थस्य प्रीत्यादेर्जनकत्वेन तदिच्छाया वा स्वोद्देश्यजनकत्वेन संबन्धेन क्वचिद्धात्वर्थफलेऽन्वयः यथा ब्राह्मणाय गां द-दातीत्यत्र यथा वा यदग्नये जुहोतीत्यत्र अग्निप्रीतेस्त-दिच्छाया वा होमफले वह्निसंयोगे वृक्षायोदकं सि-ञ्चतीत्यत्र वृक्षपुष्टेस्तदिच्छाया वा जलस्य संयोगे विप्रा-यान्नं निर्वपतीत्यत्र विप्रभोजनस्य तदिच्छाया वाऽन्नवि-क्लित्तौ खण्डिकोपाध्यायः शिष्याय चपेटां ददातीत्यत्र

शिष्यव्यथायास्तदिच्छाया वाऽभिधाने नयतिना फल-
तया संयोगाविवक्षायां कर्मानुकूलव्यापारेऽभिहिते अ-
जां ग्रामाय नयतीत्यत्र ग्रामसंयोगस्य तदिच्छाया वा
कर्मणि यत्र तु संयोगोऽपि फलतया विवक्षितस्तत्र परत्वा
कर्मसंज्ञया संप्रदानसंज्ञाबाधात् अजां ग्रामं नयतीत्येव
प्रमाणमेवं गमनजन्यसंयोगस्य गमिकर्तरि सत्त्वेऽपि प-
रत्वा कर्तृसंज्ञया संप्रदानसंज्ञाबाधान्न कर्तरि चतुर्थीति
क्व चिच्चतुर्थ्यर्थः प्रधानक्रियायामन्वेति यथात्मने वै पुत्रः
प्रियो भवतीत्यत्र चतुर्थ्यर्थस्यात्मप्रीतेस्तदिच्छाया वा
पुत्रप्रियभावे पत्ये शेते प्रौढवधूरित्यत्र पतिप्रीतेस्तदि-
च्छाया वा शयने गमेः स्पन्दरूपव्यापारमात्रार्थकत्वे ग्रा-
माय गच्छतीत्यत्र ग्रामसंयोगस्य तदिच्छाया वा जनक-
त्वेन स्वोद्देश्यजनकत्वेन वाऽन्वयः अतो गत्यर्थकर्मणि
विभाषा चतुर्थीविधिः प्रत्याख्येयः शुद्धस्पन्दार्थकगमियोगे
संयोगस्य चतुर्थ्यर्थतया ग्रामाय गच्छतीतिप्रयोगस्या-
प्युपपन्नत्वात् यत्रापि धातोर्व्यापारमात्रमर्थः फलाविव-
क्षा वा तत्र संप्रदानतासम्भवे वा ग्रामाय चलति स्पन्द-
ते वा तण्डुलायौदनाय वा पचतीतिप्रयोगोऽपीष्ट एव
संयोगस्य विक्लित्त्यादेः फलस्य चतुर्थ्या प्रतिपादनादिति
वदन्ति । तन्न विचारसहं तथा हि ददातियोगे प्रीति-
र्न चतुर्थ्यर्थः प्रीत्यजनकेऽपि दाने चतुर्थीप्रयोगात् नापि
प्रीतीच्छा गौरवात् दर्शितसंबन्धेन तस्याप्यनन्वयात् न
च प्रीतिजनकत्वेच्छा चतुर्थ्यर्थस्तस्याः प्रीतिविषयतानि
रूपितजनकत्वविषयतानिरूपितविषयतया ददातिफले
स्वत्वेऽन्वय इति वाच्यम् । अतिगौरवात् पत्नीप्रीतिज-

नके श्वशुराय दाने पत्न्यै ददातीतिप्रयोगापत्तेश्च एवं जुहोतियोगे कृत्तिकादेवताकहोमे वह्निप्रीतिजनके वह्नये जुहोतीतिप्रयोगापत्तेः विष्णुप्रीत्यर्थं क्रियमाणे दाने होमे च विष्णवे ददाति जुहोति वेति प्रयोगापत्तेश्च न च तत्रापि जुहोत्यर्थप्रयत्ने विष्णुप्रीतेरुद्देश्यत्वाज्जुहोतियोगे विष्णवे जुहोतीतिप्रयोगापत्तिरिति वाच्यम्। यतो यद्देवताको होमस्तत्प्रीतिरेव जुहोत्यर्थप्रयत्नस्योद्देश्येति विष्णुप्रीतिस्तु होमदेवताप्रीतेः फलमिति विष्णुप्रीतीच्छाया दर्शितविषयतासंबन्धेन ददातिफले गोनिष्ठविप्रस्वत्वे जुहोतिफले हविर्निष्ठवह्निसंयोगे सत्त्वात् दर्शितप्रयोगो दुर्वार इति न च संबन्धघटकविषयताधिकरणं जनकत्वं साक्षाज्जनकत्वं विवक्षितमिति न दर्शितप्रयोग इति वाच्यम्। तथासति गोनिष्ठविप्रस्वत्वमपि विप्रीयस्य प्रीतिपदार्थस्य सुखस्य न साक्षाज्जनकमिति विप्राय गां ददातीतिप्रयोगानापत्तेः गोनिष्ठस्वत्वस्य दुग्धादानादिद्वारा विप्रसुखजनकत्वात्। एवं वृक्षायोदकमित्यत्रापि पुष्टीच्छा न चतुर्थ्यर्थः गौरवात् वृक्षपुष्टीच्छया क्रियमाणे कूपखनने जलोत्पादनेन वा वृक्षाय कूपं खनति जलमुत्पादयति वेतिप्रयोगापत्तेश्च आत्मने वै पुत्रः प्रियो भवतीत्यत्रात्मप्रीतीच्छा न चतुर्थ्यर्थः पुत्रप्रियभावस्यात्मप्रीतीच्छाऽप्रयोज्यत्वात् नाप्यात्मप्रीतिर्भवत्यर्थानन्वयात् तस्माद्यथात्मने वै पुत्रः प्रिय इत्यत्र क्रियाशून्यवाक्ये तादर्थ्यचतुर्थ्यां उपकारकत्वमर्थः प्रियपुत्रेऽन्वेति तथा दर्शितवाक्येऽपि पत्ये शेते इत्यत्र पतिप्रीतीच्छा न चतुर्थ्यर्थः गौरवात् पतिप्रीतीच्छया क्रि-

थमाणे शयनानुकूलपल्यङ्कस्थापने पत्ये पल्यङ्कं स्थापयतीति प्रयोगापत्तेः तस्माद्यथा वृक्षपुष्टिः सेचनप्रयत्ने तथा पतिप्रीतिरपि शयनप्रयत्ने उद्देश्यत्वेनान्वेति अतः पुष्टिप्रीत्योर्जनकयोः सेचनशयनयोर्न दर्शितप्रयोगानुपपत्तिः अजां ग्रामाय नयतीत्यत्र ग्रामसंयोगो न चतुर्थ्यर्थः ग्रामसंयोगाजनके नयत्यर्थे दर्शितप्रयोगानुपपत्तेः नापि तदिच्छा ग्रामसंयोगेच्छया अजाग्रहणे अजां ग्रामाय गृह्णातीति प्रयोगापत्तेर्गौरवाच्च गमेः शुद्धस्पन्दार्थकत्वे संयोगस्तदिच्छा वा चतुर्थ्यर्थस्तत एव ग्रामाय गच्छतीति प्रयोगोपपत्तिरिति गत्यर्थकर्मणि चतुर्थीविधिः प्रत्याख्येय इत्यपि न युक्तं फलस्य संयोगस्य धातुलभ्यस्य चतुर्थ्या प्रतिपादनासंभवात् न च फलाविवक्षायां प्रतिपादनमस्त्विद इति वाच्यम् । तथा सति धारणसंयोगाविवक्षायां दण्डाय दधातीतिप्रयोगापत्तेः ग्रामाय चलति स्पन्दते चेत्यत्र चलतिस्पन्दत्योः स्पन्दमात्रार्थकतया संयोगरूपफलावाचकत्वात् चतुर्थ्या संयोगस्वरूपफलप्रतिपादनसम्भव इति ग्रामस्य धात्वर्थान्यफलसंबन्धितयाऽभिप्रेततया सम्भवत्येव संप्रदानत्वं तण्डुलायौदनाय वा पचतीत्यपप्रयोग एव यदि च प्रयोगस्तदा तण्डुलोपकारकत्वस्यौदनजनकत्वस्य चतुर्थ्या प्रतिपादनेनेयं तादर्थ्यचतुर्थीति यदि च दण्डाय दधातीत्यादिबहुतरापप्रयोगाभ्युपगमात् धातोः फलाविवक्षायां कर्मणि संप्रदानचतुर्थीति मन्यते तदाऽपि गत्यर्थकर्मणि चतुर्थीविधेर्न प्रत्याख्यानं यतः चतुर्थी द्वितीयया सह वैकल्पिकी ग्रामादिप्रकृत्यर्थविशेषितमाधेयत्वं सं-

योगस्वरूपफलत्वान्वय्यभिधत्ते संप्रदानचतुर्थी तु फलमेवाभिधत्ते न तु फलान्वय्याधेयत्वमिति गत्यर्थकर्मणीतिसूत्रव्याख्याने वच्यते नापि संयोगेच्छा चतुर्थ्यर्थस्तथा सति ग्रामसंयोगेच्छया यानारोहणे ग्रामाय गच्छतीतिप्रयोगापत्तेः किं च संयोगेच्छार्थकत्वेऽपि चतुर्थ्या न कर्मत्वार्थकत्वं येन प्रत्याख्यानं स्यादत एव गत्यर्थकर्मणीतिसूत्रे कर्मणीत्युक्तमित्यग्रे व्यक्तीभविष्यतीति। देवदत्ताय रोचते मोदक इत्यादौ देवदत्तादेः संप्रदानत्वं ज्ञापयति। "रुच्यर्थानां प्रीयमाण" इति सूत्रम्। रुच्यर्थानां योगे प्रीयमाणो योऽर्थस्तत्कारकं संप्रदानसंज्ञकं भवतीत्यर्थकं विषयकर्तृकोऽभिलाषो रुचिः तदर्थाः रुच्यर्थाः अत एवान्यकर्तृकोऽभिलाषो रुचिरिति काशिका प्रीयमाणः रुचिकर्तृविषयप्रीतिमान् भवति हि रोचते मोदक इत्यत्र रुचिकर्ता विषयो मोदकस्तत्प्रीतिमान् देवदत्त इति तस्य संप्रदानत्वं प्रीतिश्चात्र सुखत्वेन सुखजनकत्वे न वा अभिलाषस्तद्वान् तत्समवायी तथा चायमेवाभिलाषो रुचिस्तत्समवायित्वं समवेतत्वं वा चतुर्थ्यर्थः देवदत्ताय रोचते मोदक इत्यत्र देवदत्तसमवेताभिलाषविषयो मोदक इत्यन्वयबोध इति संप्रदायः। वस्तुतस्तु रुचिरुत्कटेच्छा उत्कटत्वं च द्वेषप्रतिबन्धकतावच्छेदको जातिविशेष इत्यन्यत्र विस्तरः। रुच्यर्थाः रोचत्यादयः तदर्थकर्तृत्वं विषयस्येति रोचते इत्यादावाख्यातस्य विषयत्वमर्थ इति प्रीयमाणशब्दार्थः प्रीतिमान् प्रीतिः सुखं तथा च चतुर्थ्यर्थः सुखं तस्य सामानाधिकरण्योद्देश्यत्वाभ्यां संबन्धा-

ष्यां रुचावन्वयः सामानाधिकरण्यनिवेशात् देवदत्त-स्यान्यदीयसुखेच्छाविषय मोदके न तथाप्रयोगः। एवं देवदत्ताय रोचते मोदक इत्यत्र देवदत्तसुखस्य समानाधिकरणोद्देश्यिनी योत्कटेच्छा तद्विषयो मोदक इत्यन्वयबोधः। अत एव सूत्रे प्रीयमाणशब्दोपादानमर्थवदन्यथा रुच्यर्थानां रुचिमानित्येव सुनिः सूत्रयेत्ताव-तैव समवायित्वस्य समेवतत्वस्य वा चतुर्थ्यर्थता सम्भवादिति प्रीयमाणग्रहणं तु देवदत्ताय रोचते मोदकः पथि इत्यत्र पथः संप्रदानतानिषेधार्थमिति। कतिपयधातुयोगे ज्ञीप्स्यमानस्य संप्रदानता ज्ञापयति। "श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः" इति सूत्रं श्लाघिर्ह्नुतिस्तिष्ठतिः शपिश्चामीषां धातूनां योगे ज्ञीप्स्यमानो योऽर्थस्तत्कारकसंज्ञं भवतीत्यर्थकं ज्ञीप्स्यमानो ज्ञापयितुमभिप्रेत इति काशिका ज्ञीप्स्यमानग्रहणं देवदत्ताय श्लाघते पथि इत्यत्र पथः संप्रदानतानिषेधार्थमिति अत्र श्लाघेरुत्कर्ष-प्रकारकप्रतिपत्त्यनुकूलो व्यापारः शब्दो वाऽर्थः ह्नुते-रदर्शनानुकूलो व्यापारो ऽर्थस्तिष्ठतेस्तदन्तस्य प्रकाशानुकूलो व्यापारः संमुखावस्थानादिरर्थः शपेरपकर्षप्रति-पत्त्यनुकूलो व्यापारः शब्दो वाऽर्थः नरपतये श्लाघते इत्यत्रोत्कर्षप्रकारकप्रतिपत्तिस्वरूपे फले विशेष्यत्वस्व-रूपे फले विशेष्यत्वस्वरूपं विशेष्यतासंबन्धावच्छिन्ना-धेयत्वस्वरूपं वा कर्मत्वं वा चतुर्थ्यर्थोऽन्वेति जाराय निह्नुते इत्यत्रादर्शने विषयतासंबन्धावच्छिन्नप्रतियो-गिताके चाक्षुषप्रतियोगिके ज्ञानसामान्यप्रतियोगिके वा

अभावे चानुपविषयत्वाभावे वा फले विशेषणतासंबन्धा-
वच्छिन्नाधेयत्वस्वरूपं कर्मत्वमन्वेति जम्भारये कस्तिष्ठ-
ते इत्यत्र प्रकाशे ज्ञानस्वरूपे फले समवेतत्वस्वरूपं कर्म-
त्वमन्वेति शङ्काय शपते इत्यत्रापकर्षप्रकारकप्रतिप-
त्तौ फले विशेष्यत्वं विशेष्यतासंबन्धावच्छिन्नाधेयत्वं वा
कर्मत्वमन्वेति इति कर्मसंज्ञापवादार्थं संप्रदानसंज्ञावि-
धानमिति वदन्ति। वस्तुतस्तु सूत्रे ज्ञीप्स्यमानग्रहणात्
ज्ञानेच्छा चतुर्थ्यर्थो ज्ञायते तत्र ज्ञानस्य धातुना लाभे
सतीच्छामात्रं चतुर्थ्यर्थः अन्यथा "संप्रदाने चतुर्थी"ति
सूत्रानन्तरं श्लाघह्नुङ्स्थाशपां कर्मणीत्येव मुनिः सूत्रये-
त् ज्ञीप्स्यमानशब्दवैयर्थ्यं च स्यात् किं च कर्मसंज्ञाप-
वादाभ्युपगमे "अपन्हुवानस्य जनाय यन्निजामधीरतामस्य
कृतं स्मरेण यदी"त्यादौ कर्मप्रत्ययद्वितीयादेरनुपपत्ति-
प्रसङ्गः देवदत्ताय श्लाघत इत्यादौ देवदत्तादेः श्लाघति-
कर्मत्वेऽपि निरवकाशया संप्रदानसंज्ञया कर्मसंज्ञाबा-
धात् ज्ञीप्स्यमानभेदस्य द्वितीयार्थस्यानन्वयात् वा
श्लाघतियोगे न द्वितीयादिकर्मप्रत्ययः किं तु ज्ञीप्स्यमा-
नार्थिका चतुर्थी तत्रेच्छा चतुर्थ्यर्थः अत एव देवदत्ताय
श्लाघते देवदत्तं श्लाघमानस्तां श्लाघां तमेव ज्ञापयि-
तुमिच्छतीत्यर्थ इति काशिका। तत्रेच्छायां उत्कर्षप्र-
कारकज्ञानरूपफलस्योद्देश्यतया देवदत्तादेः प्रकृत्यर्थ-
स्य समवेतत्वसंसर्गावच्छिन्नायास्तादृशज्ञानरूपफल-
निष्ठोद्देश्यतावच्छेदकतायाः प्रतियोगित्वेन संबन्धेन
तादृशज्ञाननिष्ठविशेष्यितानिष्ठोद्देश्यतावच्छेदकता-
निरूपितावच्छेदकतायाः प्रतियोगित्वेन संबन्धेन चा-

निरूपितावच्छेदकतायाः प्रतियोगित्वेन संबन्धेन चा-
न्वयः देवदत्तस्य देवदत्तविशेष्यताकोत्कर्षप्रकारकज्ञानं
भवत्विति इच्छायां ज्ञाननिष्ठोद्देश्यतानिरूपितसमवेतत्वसं-
सर्गावच्छिन्नदेवदत्तनिष्ठावच्छेदकताप्रतियोगित्वं तथा-
विधोद्देश्यतानिरूपितविशेष्यतानिष्ठावच्छेदकतानिरू-
पितदेवदत्तनिष्ठावच्छेदकताप्रतियोगित्वं चेति संबन्ध-
द्वयं निराबाधमिति । अन्यविशेष्यकोत्कर्षप्रकारकदेवद-
त्तज्ञानस्य देवदत्तविशेष्यकोत्कर्षप्रकारकान्यदीयज्ञानस्य
चेच्छायां न तथाप्रयोगः संबन्धद्वयेनेच्छायामन्वया-
भावात् एवं च श्लाघतिः सकर्मकस्तेन पण्डिताय नर-
पतिः श्लाघत इति प्रयोगस्तत्र समवेतत्वसंसर्गावच्छिन्न-
तादृशज्ञानोद्देश्यतावच्छेदकताप्रतियोगित्वेन संबन्धेनैव
चतुर्थ्यर्थेच्छायां प्रकृत्यर्थस्य तादृशज्ञानरूपफले प्रकृत्यर्थ-
विशेषितस्य द्वितीयार्थस्य विशेष्यत्वस्य विशेष्यत्वसंबन्धा-
वच्छिन्नाधेयत्वस्य वाऽन्वय इति एवं देवदत्ताय निन्हुते
इत्यादौ कृतिफले ऽदर्शने चतुर्थ्यर्थस्येच्छाया इच्छायां
तु विशेषणतासंबन्धावच्छिन्नाधेयत्वसंसर्गावच्छिन्नाया
अदर्शननिष्ठोद्देश्यतावच्छेदकतायाः प्रतियोगित्वेन संब-
न्धेन प्रकृत्यर्थस्यान्वयः अधीरतां जनाय निन्हुत इत्य-
त्रादर्शनप्रतियोगिनि दर्शने फलैकदेशे निन्हवे दर्शनमभा-
वश्चेत्युभयार्थकत्वे फले दर्शने द्वितीयार्थस्य विशेष्यत्वस्य
तत्संबन्धावच्छिन्नाधेयत्वस्य वाऽन्वयः वस्तुतः सतोऽसत्त्वेन
प्रतिपादनं निन्हुतिरतो गगनं निन्हुत इति न प्रयोगः
तथा च सत्त्वप्रकारकप्रतिपत्त्यनुकूलो व्यापारो न्हुतेरर्थः
अत एव ज्ञीप्स्यमानता चतुर्थीप्रकृत्यर्थस्य संपद्यते एवं

मसत्त्वप्रकारकप्रतिपत्तौ पूर्ववत् चतुर्थ्यर्थस्य द्वितीयार्थस्य चान्वयः अनिष्टवत्ताप्रतिपत्त्यनुकूलो व्यापारः शपेरर्थस्तत्रानिष्टवतः प्रतिपाद्यस्य प्रतिपत्तीच्छायां संप्रदानसंज्ञया कर्मसंज्ञाबाधात् ज्ञीप्स्यमानभेदस्य द्वितीयार्थस्यानन्वयाद्वा न द्वितीया यथा शक्राय शपते दुर्वासा इत्यत्र चतुर्थ्यर्थस्येच्छाया अनिष्टप्रतिपत्ताविच्छायां प्रकृत्यर्थस्य च पूर्ववदन्वयः यत्र च शापकर्तुः शापकर्मणि न ज्ञीप्सा तत्र द्वितीया यथा "मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप से"ति कर्मणस्य ज्ञीप्स्यमानतायां चतुर्थीप्रयोगोऽपीष्ट एव यथा पित्रे पुत्रं शपते गुरवे शिष्यं शपत इति यत्र च शुद्ध्यशुद्धिज्ञानं शपेरर्थस्तत्र न चतुर्थी न वा द्वितीया शुद्ध्यशुद्धिकर्मावरोधो द्वितीयाबाधकः अनिष्टप्रतिपत्त्यर्थकस्यैव ज्ञीप्स्यमानतायामेव चतुर्थ्याः साधुत्वमिति किं तु हेतुत्वार्थिका तृतीया यथा पुत्रेण दारैर्वा शपतीति अत एव ।

आचम्य चाम्बु तृषितः करकोशपेयं
भावानुरक्तललनासुरतैः शपेयम् ।
जीयेय येन कविना यमकैः परेण
तस्मै वहेयमुदकं घटखर्परेण ॥

इति घटखर्परः । शुद्धाशुद्धी सत्यासत्यप्रतिज्ञे बोध्ये तङन्तस्य तिष्ठतेः स्वप्रकाशानुकूलोऽव्यवहितावस्थानादिरर्थः प्रकाशः चाक्षुषं ज्ञानसामान्यं वेत्यन्यदेतत् । तत्र ज्ञीप्स्यमानस्य चतुर्थीप्रकृतिता यथा कृष्णाय तिष्ठते गोपीत्यादावत्र चतुर्थ्यर्थ इच्छायां समवेतत्वसंसर्गावच्छिन्नायां प्रकाशनिष्ठोद्देश्यतानिरूपितावच्छेदकतायां

प्रतियोगित्वेन संबन्धेनान्वयः इच्छाया उद्देश्यतया प्रकाशे तस्यानुकूलतया अव्यवहितावस्थानादौ तस्य तिङर्थे आश्रयत्वेऽन्वय इति यत्र तङन्तस्यापि तिष्ठतेः स्थेयविनिवेदनमर्थः स्थेयो मध्यस्थो निर्णायक इति यावत् । तत्र प्रयुज्यमानेऽपि न चतुर्थी कर्म एव "संशय्य कर्णादिषु तिष्ठते यः" इति भारविरत्र समानदेशत्वसंबन्धावच्छिन्नाधेयत्वं यत्पदार्थे कर्तरि विद्यमानत्वं कर्तृघटितपरम्परासंसर्गावच्छिन्नं सप्तम्यर्थो विनिवेदने व्यापारेऽन्वेति तथा च संशयानन्तरितस्य कर्णाद्यधिकरणस्य निर्णायकविनिवेदनस्य कर्ता य इत्यन्वयबोधः कर्णादेर्निर्णायकत्वं विनिवेद्यत्वं च मानान्तरवेद्यमिति । धारयतेर्योगे उत्तमर्णस्य संप्रदानतां ज्ञापयति । "धारेरुत्तमर्णः" इति सूत्रं धारयतेर्योगे उत्तमर्णो योऽर्थः तत्कारकं संप्रदानसंज्ञं भवतीत्यर्थकम् उत्तममृणं यस्य स उत्तमर्णः यदीयं धनं स स्वामी प्रयोक्ता उत्तमर्ण इति काशिका देवदत्ताय शतं धारयतीत्यत्र ऋणत्वनिरूपिताधमर्णत्वं धारयतेरर्थः उत्तमर्णत्वं स्वामित्वविशेषः चतुर्थ्यर्थः फलीभूतऋणत्वाश्रयताशतस्य कर्मत्वमेवं देवदत्तनिष्ठोत्तमर्णत्वनिरूपितशतवृत्तिऋणप्रतियोगिकाधमर्णत्वाश्रयत्वं वाक्यार्थः ऋणत्वाधमर्णत्वे स्वत्वस्वामित्ववदतिरिक्तपदार्थावेवानुगतप्रतीतिव्यवहारयोरविशेषात्स्वत्वाभाव एव ऋणत्वमिति चेत् ऋणत्वाभाव एव स्वत्वमित्यपि किन्न स्यात् । यदि चौद्धारनाख्यपापविशेषस्य साधनं विनियोग ऋणत्वं तदा पापासाधनविनियोग एव स्वत्वमिति स्यात्

अविनियोगकाले स्वव्यवहारऋणव्यवहारेण तुल्ययोग-क्षेमः शास्त्रमपि ऋणत्वे स्वत्वे च तुल्यं शास्त्रस्याननु-गतप्रवृत्तिनिमित्तकऋणपदघटितत्वमिव तादृशस्वपद-घटितत्वमपि तदेतदन्यत्र विस्तृतमिति वदन्ति। वस्तुत-स्तु उद्धारनाश्यपापजनकग्रहणाहितव्यापारो धारयते-रर्थः फलीभूतगृहणविषयतया शतादीनां कर्मत्वमुत्त-मर्णः प्रयोक्ता प्रयोगः फलाजिघृक्षा तज्जनकज्ञानजन्यसं-स्कारः उपकारकता कीर्त्तिजनकः पुण्यविशेषो वा स च चतुर्थ्यर्थः तथाविधपापवानधमर्णः एवं देवदत्त-निष्ठफलाजिघृक्षादेः प्रयोज्यं यत्तथाविधं शतकर्मकग्र-हणं तत्प्रयोज्यव्यापारो भोजनादिस्तदाश्रयत्वं वाक्यार्थः ऋणमपि तथाविधगृहणकर्मबोध्यम् ऋणं धारयतीत्यत्र ग्राह्यं गृह्णातीत्यत्रेवान्वयो बोध्यः एवमर्थान्तरेऽपि धार-यतेः प्रयोगे चतुर्थी दृश्यते यथा।

सेवनवेतनमृणमिह
मह्यं दीनाय धारयसि।
अतिचण्डि चण्डखण्डिनि
वदाम्यपर्णे ऽतिभीतितो भवतीम्॥

इत्यत्र धारयतेरभीष्टफलदानानुकूलव्यापारोऽर्थः ऋ-णपदलभ्यमवश्यदेयं वेतनपदलभ्यं साध्यम् एवं सेव-नसाध्यावश्यदेयकर्मको योऽभीष्टप्रयोजकदानानुकूलो व्यापारस्तदाश्रयस्त्वमित्यन्वयबोधः मह्यमित्यत्र चतुर्थ्यर्थः पुण्यविशेषः स प्रयोज्यत्वेन व्यापारे ऽन्वेति एवं ग्राह्यं गृह्णातीतिवत् उत्तमर्णाय धारयति अधमर्णो धारयती-त्यादौ विशेषणविशेष्यभावव्यत्यासेनान्वयो बोध्यः सूत्रे

उत्तमर्णाग्रहणं देवदत्ताय शतं धारयति ग्रामे इत्यत्र ग्रामस्य संप्रदानतानिषेधार्थमिति स्पृहियोगे चतुर्थीं ज्ञापयति । "स्पृहेरीप्सितः" इति सूत्रं स्पृहियोगे ईप्सितो योऽर्थस्तत्कारकं संप्रदानसंज्ञं भवतीत्यर्थकम् । ईप्सित इत्यत्राभिप्रेत उच्यत इति काशिका पुष्पेभ्यः स्पृहयति रमिक इत्यत्र स्पृहेरभिलाषोऽर्थः चतुर्थ्या विषयत्वमर्थः एवं पुष्पविषयकाभिलाषाश्रय इत्यन्वयबोधः ।

स्त्रीषु प्रवीरजननी जननी तवैव
देवी स्वयं भगवती गिरिजाऽपि यस्यै ।
त्वद्दोर्विशीकृतविशाखसुखावलोक-
व्रीडाविदीर्णहृदया स्पृहयांबभूव ॥

इत्यत्र रेणुकासदृशी भवेयमित्यभिलाषस्तत्र रेणुकाविषयत्वस्यानपायान्न चतुर्थ्या अनुपपत्तिः यदि च विषयत्वमात्रं न चतुर्थ्यर्थः तथासति पुष्पत्वं स्पृहयतीति प्रयोगापत्तेः किं तूद्देश्यत्वं तच्च दर्शिताभिलाषे न रेणुकायाः किं तु तत्सादृश्यस्येति यस्यै भगवती स्पृहयतीत्यत्र चतुर्थी नोपपद्यत इति विभाव्यते तदा स्वीक्रियतां तादात्म्येनोद्देश्यप्रकारकोऽभिलाषः ब्राह्मणोऽहं स्यामितीच्छाकारदर्शनात् ब्राह्मण इष्टसाधनं ब्राह्मणोऽहमिति ज्ञानद्वयेन विशिष्टज्ञानेन वा तथाविधेच्छाजननसम्भवात् तथा च रेणुका भवेयमित्यभिलाष एव स्पृहा तत्र रेणुकाया उद्देश्यत्वं निराबाधमिति चतुर्थ्या नानुपपत्तिरिति संप्रदायः । वस्तुतस्तु पुष्पेभ्यः स्पृहयतीत्यत्र पुष्पादीनां सिद्धत्वादुद्देश्यत्वं न सम्भवतीति नोद्देश्यत्वं चतुर्थ्यर्थः किं तु सूत्रे ईप्सितशब्दोपादानात् ई-

प्ताविषयः प्रतीयते ईप्सा आप्तीच्छा आप्तिः संबन्धस्तथा चाप्तिश्चतुर्थ्यर्थः स च संबन्धः पुष्पेभ्य इत्यत्र स्वत्वं संयोगश्च रेणुकायै इत्यत्र तादात्म्यसंबन्धस्तूद्देश्यतया स्पृहायामन्वेति तथा च पुष्पसंयोगस्पृहाश्रयः रेणुकातादात्म्यस्पृहाश्रय इत्यन्वयबोधः कान्तस्य स्पृहे इत्यत्र शेषषष्ठ्या विषयत्वमर्थः स्पृहायामन्वेति यथा घटज्ञानं घटत्वस्य यथा वा घटेच्छा घटत्वस्येत्यादाविति। ननु स्पृह ईप्सायामित्यनेन स्पृहेरिच्छार्थकत्वं तत्रेच्छामात्रार्थकत्वे फलावाचकत्वादकर्मकत्वं विषयतारूपफलवाचकत्वेऽपि विषये निरवकाशया संप्रदानसंज्ञया कर्मसंज्ञाबाधात् ईप्सितभेदस्य कर्मप्रत्ययार्थस्यानन्वयाद्वा कर्मप्रत्ययानुपपत्तेः स्पृहणीयगुणैरित्यादिप्रयोगो ऽनुपपन्न इति चेत् दानीयो ब्राह्मण इत्यादिप्रयोगदर्शनात् संप्रदानेऽप्यनीयरः प्रवृत्तेः स्पृहणीय इत्यत्र कृत्यप्रत्ययस्य संप्रदानार्थकत्वं न तु कर्मार्थकत्वं एतेन "परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत्" इत्यपि समाहितं हरदत्तस्तु यत्रेच्छामात्रार्थकत्वात् फलावाचकः स्पृहिस्तत्र विषयत्वमुद्देश्यत्वं वा चतुर्थ्यभिधत्ते यत्र च विषयतास्वरूपफलवाचकस्तत्र कर्मप्रत्ययो निरपवाद एव अत एव "स्पृहयन्ति गुणान्मनीषिणः परिवादं तु परस्य दुर्जनाः" इति एवं स्पृहणीय इति कर्मण्येव कृत्यप्रत्ययः यत्र च विषयता शेषत्वेन विवक्षिता तत्र शेषषष्ठ्येव यथा "कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च" इत्याह वस्तुतस्तु यत्र स्पृहेरुत्कटेच्छार्थस्तत्रैवाप्तिश्चतुर्थ्यर्थः यत्र चे-

च्छासामान्यमर्थः तत्र चतुर्थ्या अप्रसक्तेर्न कर्मप्रत्ययानुपपत्तिः उत्कटेच्छार्थकतया कच्यर्थकत्वेऽपि स्पृहेर्योगे ईप्सिते चतुर्थीविधानं प्रीयमाणे निषेधमपि सूचयति अतश्चैत्राय पुष्पेभ्यः स्पृहयतीति न प्रयोग इति ईप्सितग्रहणं तु प्रीयमाणे अधिकरणे च संप्रदानतानिषेधार्थमतः पुष्पेभ्यो वने स्पृहयतीत्यत्र वनस्य न संप्रदानतेति। क्रुधाद्यर्थकानां योगे चतुर्थीं ज्ञापयति । "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप इति सूत्रं क्रोधाद्यर्थकानां योगे यं प्रति कोपस्तत्कारकं संप्रदानसंज्ञं भवतीत्यर्थकं यत्र येन वेत्यपहाय सूत्रे यं प्रतीत्युक्त्या चतुर्थ्या नानाविधोऽर्थो ज्ञाप्यते अत एव क्रोधस्तावत् कोपः एव द्रोहादयोऽपि कोपप्रभवा एव गृह्यन्ते तस्मात्सामान्येन विशेषणं यं प्रति कोप इति काशिका । कोपप्रभवानां द्रोहादीनां ग्रहणाल्लोभादिप्रभवद्रोहाद्यर्थकधातुयोगे न चतुर्थीति ज्ञाप्यते क्रोधमात्रार्थकाः फलावाचकत्वात् अकर्मकाः क्रुधिकुप्यादयः क्रोधोऽमर्षः द्वेष इति यावत् । देवदत्ताय क्रुध्यति कुप्यति वेत्यादौ चतुर्थ्या द्विष्टतालक्षणं विषयत्वमर्थः तथा च देवदत्तविषयताकद्वेषाश्रयत्वं वाक्यार्थः । द्विषिस्तु द्विष्टतालक्षणफलं द्वेषं चाभिधत्त इति न क्रुधिपर्यायस्तद्योगे न चतुर्थी किन्तु द्वितीया अत एव शत्रुं द्वेष्टीत्येव प्रमाणं द्रुहेर्द्विष्टाचरणमर्थः देवदत्ताय द्रुह्यतीत्यत्र चतुर्थ्या द्वेषान्वयिसमवेतत्वमर्थस्तथा च देवदत्तसमवेतद्वेषविषयाचाराश्रयत्वं वाक्यार्थः ईर्ष्यतेः परक्रियागोचरो द्वेषोऽर्थः चतुर्थ्याः क्रियान्वयिसमवेतत्वमर्थः देवदत्ताय ईर्ष्यते इत्यत्र दे-

वदत्तसमवेतक्रियागोचरद्वेषाश्रयत्वं वाक्यार्थः यत्र तु क्रिया फलविषयेर्ष्यतिर्नोच्यते तत्र क्रियाविषये कर्मणि द्वितीयैव प्रमाणं यथा भार्यामीर्ष्यति मैनामन्यो द्राक्षीदिति भार्याविषयकमन्यकर्तृकदर्शनं न सहत इति तदर्थः असूयतेरसूयाऽर्थः सा च परगुणे दोषारोपः देवदत्तायासूयतीत्यत्र चतुर्थ्याः संबन्धित्वं समवेतत्वं वाऽर्थः तथा च देवदत्तसंबन्धिगुणं दोषत्वेनारोपयतीत्यर्थः वादिने असूयतीत्यत्र वादिसमवेतज्ञानं भ्रमत्वेन ख्यापयतीत्यर्थ इति संप्रदायः । वस्तुतस्तु क्रुध्यत्यादेः क्रोधोऽर्थः स चामर्षस्तच्चासहिष्णुत्वम् अत एव क्रोधोऽमर्षः इति काशिका कोपक्रोधामर्षरोषेत्याद्यमरोऽपि असहिष्णुत्वं च स्वानिष्टानुकूलपरक्रियागोचरो द्वेषः चतुर्थ्यास्तु क्रियान्वय्याधेयत्वमर्थः देवदत्ताय क्रुध्यति यज्ञदत्त इत्यत्र स्वानिष्टानुकूलदेवदत्तवृत्तिक्रियागोचरद्वेषाश्रयो यज्ञदत्त इत्यन्वयबोधः । अनिष्टानुकूलायाशिष्यगताया पुत्रगतायाश्च क्रियाया द्वेषसम्भवात् अनिष्टानुकूलव्यापारो द्रुहेरर्थः अत एव द्रोहोऽपकार इति काशिका चतुर्थ्यास्त्वनिष्टान्वय्याधेयत्वमर्थः अनिष्टं च दुःखं सुखाभावश्च देवदत्ताय द्रुह्यति यज्ञदत्त इत्यत्र देवदत्तवृत्तिदुःखानुकूलव्यापारानुकूलकृतिमान् यज्ञदत्त इत्यन्वयबोधः सपत्न्यै द्रुह्यति स्त्रीत्यत्र सपत्नीवृत्तिसुखाभावानुकूलव्यापारानुकूलकृतिमती स्त्रीत्यन्वयबोधः उत्कर्षगोचरो द्वेष ईर्ष्यतेरर्थश्चतुर्थ्याः उत्कर्षान्वय्याधेयत्वमर्थः कर्णायेर्ष्यति फाल्गुन इत्यत्र कर्णवृत्त्युत्कर्षगोचरद्वेषाश्रयः फाल्गुन इत्यन्वयबोधः । यत्र तु

फलतया क्रिया तदनुकूलो द्वेषो व्यापारस्तदीर्ष्यतिना प्र-
त्याय्यते फलीभूतक्रियान्वयिनि भार्यादौ न कोपः स्वा-
निष्टानुकूलव्यापारविरहात् तत्र फलान्वयिनि द्वितीयैव
प्रमाणं यथा भार्यामीर्ष्यतीत्यत्रान्यकर्तृकदर्शनं फलं द्वेषो
व्यापार ईर्ष्यतेरर्थः दर्शने द्वितीयार्थो विषयत्वं तत्सं-
स्थावच्छिन्नाधेयत्वं वा भार्याकर्मकान्यकर्तृकदर्शनगोचर-
द्वेषाश्रयत्वं वाक्यार्थः एतदर्थमेव यं प्रति कोप इत्युक्त-
मत एव यं प्रति कोप इति किं भार्यामीर्ष्यति मैनाम-
न्यो द्राक्षीदिति काशिका एवं यत्र क्रियाफलद्वेषोऽपी-
र्ष्यतिना प्रत्याय्यते तत्रापि द्वितीयैव यथा शिष्यमीर्ष्यति
मैनमन्योऽध्यापयेदिति अन्यकर्तृकक्रियाद्वेषस्य धात्वर्थत्वे
तु उक्तार्थानामप्रयोगात् अन्यस्मै द्रष्ट्रेऽध्यापकाय वेर्ष्यती-
ति न प्रयोगः फलीभूतक्रियान्वयिनि कर्मणि स्वानिष्टा-
नुकूलक्रियाविरहायोगात् न कोपविषयत्वमिति न
तत्र चतुर्थीति एवं गुणे दोषारोपोऽसूया असूयतेरर्थः च-
तुर्थ्या गुणान्वय्याधेयत्वमर्थः देवदत्तायासूयति यज्ञदत्त-
इत्यत्र देवदत्तवृत्तिधैर्यादिगुणधर्मिकचौर्यत्वारोपकर्ता
यज्ञदत्त इत्यन्वयबोधः एवं सपत्न्यै असूयतीत्यत्र स-
पत्नीवृत्तिपतिसेवनादिकं कार्मणत्वेनारोपयतीत्यर्थः वा-
दिनेऽसूयतीत्यत्र वादिवृत्तिप्रमाणवाक्यमप्रमाणत्वेना-
रोपयतीत्यर्थः गुणा दोषाश्च प्रातिस्विकरूपेण प्रकर-
णादिवशादसूयतिनोपस्थाप्यन्ते गुणास्तु निन्दाप्रयोज-
कान्ये पदार्थास्ते च वैशेषिकसिद्धा द्रव्यगुणक्रिया-
सामान्यादयः प्रत्येतव्याः यच्च काव्यप्रकाशे "भ्रातस्ताव-
दहं शठेन विधिना निद्रादरिद्रीकृत" इत्यत्र विधिं प्रत्य-

२०

सूया व्यज्यत इत्युक्तं तत्र विधेर्नैसर्गिके निन्द्रादरिद्रीकर-
णे गुणे शाठ्यहेतुकत्वस्वरूपदोषत्वं स्वप्नसमागमविच्छे-
देन विहस्तेन कामिना समारोपितमिति गुणे दोषा-
रोपरूपो ऽसूया भावोऽभिव्यज्यत इति संप्रदायः । वस्तु-
तस्तु अनिन्द्ये विधौ विधित्वे वा शठतादात्म्यस्य शठत्व-
तादात्म्यस्य वाऽऽरोपस्तादृशेन कामिना कृत इत्यनिन्द्ये
दोषारोपरूपाऽसूया व्यज्यत इति दोषास्तु निन्दाप्रयो-
जका बोध्याः । एतेन दुःखाय नरकाय वा कुप्यतीति
प्रयोगापत्तिः दुःखविषयकद्वेषस्य सत्त्वात् बृहस्पतिरध्या-
पयन् दैत्येभ्यो द्रुह्यतीति प्रयोगानापत्तिः अध्ययन-
स्य दैत्यसमवेतद्वेषाविषयत्वात् कूपे पततेऽन्धायेर्ष्यतीति
प्रयोगापत्तिरन्धकर्तृककूपपतनगोचरद्वेषस्य निवारके स-
त्त्वादिति परास्तम् । कुप्यादिधातूनां चतुर्थ्याश्च दर्शिता-
र्थकतया अतिप्रसङ्गाप्रसङ्गयोरभावात् कुप्यादीनां दर्शि-
तार्थकत्वे कर्मणि द्वितीया प्रसक्ता निरवकाशया संप्रदा-
नसंज्ञया असाधुत्वज्ञापिकया बाध्यते सूत्रे यं प्रति कोप
इत्यत्र कोपोपादानं न चतुर्थ्यर्थतासूचनाय तथा सति कु-
प्यादिप्रयोगानुपपत्तेः धात्वर्थे कोपे चतुर्थ्यर्थकोपानन्व-
यात् किं तु स्वरूपकथनं भवतु वा प्रतीत्युपादानात्
विषयत्वं कोपस्य चतुर्थ्या अर्थः देवदत्ताय क्रुध्यतीत्यत्र
कोपार्थकधातुयोगे विषयित्वं चतुर्थ्यर्थः अनिष्टानुकूल-
व्यापारगोचरद्वेषे कोपेऽन्वेति देवदत्तादेर्यज्ञदत्तानिष्टा-
नुकूलव्यापारकर्तृत्वमर्थादवगम्यते स्वविषयकयज्ञद-
त्तीयद्वेषप्रयोजकत्वात् देवदत्ताय द्रुह्यतीत्यत्र चतुर्थ्या
द्वेषमात्रं कोपोऽर्थस्तत्र विषयितया प्रकृत्यर्थस्यान्वयः अ-

निष्टानुकूलव्यापारे द्रोहे कोपः प्रयोज्यतयाऽन्वेति देवद-
त्तादेरनिष्टं पूर्ववदवगम्यते देवदत्तायेर्ष्यतीत्यत्र पूर्ववत् को-
पश्चतुर्थ्यर्थः उत्कर्षगोचरद्वेषे धात्वर्थे प्रयोज्यतयाऽन्वेति
देवदत्तादेरुत्कर्षः पूर्ववदेवावगम्यते देवदत्तायासूयतीत्य-
त्र पूर्ववत्कोपश्चतुर्थ्यर्थः गुणे दोषारोपस्वरूपे धात्वर्थे पूर्व-
वदन्वेति देवदत्तादेर्गुणः पूर्ववत् अवगम्यते अस्मिन् काण्डे
न दर्शितातिप्रसङ्गाप्रसङ्गौ न वा धनिनिष्ठानिष्टानुकू-
लव्यापारकर्तृत्वेऽपि चौरस्य धनिने द्रुह्यति चौर इति
प्रयोगः धनिनः कोपाविषयत्वात् संप्रदानत्वाप्रसक्तेः य-
दि कोपमूलकमपि चौर्यं तदा तादृशप्रयोगोऽपीष्ट एव
सोपसर्गयोः क्रुधद्रुहोर्योगे कोपविषयस्य न संप्रदानसंज्ञा
निरवकाशया कर्मसंज्ञया बाधात् क्रुधद्रुहोरुपसृष्टयोः
कर्मेत्यनुशासनेन कर्मसंज्ञाविधानात् द्वितीयैव प्रमाणं
क्रूरमभिक्रुध्यति अभिद्रुह्यति वेत्यत्र विषयत्वं कोपस्य
यथायोग्यं द्वितीयाऽर्थः देवदत्ताय क्रुध्यति द्रुह्यति वेति
वदन्वयबोध इति प्रागेवोक्तम् । राधीक्ष्योर्योगे चतुर्थीं
ज्ञापयति । " राधीक्ष्योर्यस्य विप्रश्नः " इति सूत्रं रा-
धेरीक्षेश्च योगे यस्य विप्रश्नस्तत्कारकं संप्रदानसंज्ञं भव-
तीत्यर्थकं विप्रश्नो विविधः प्रश्नः विविधो विविधविष-
यक इत्यर्थः अत एव यस्य विप्रश्नो विविधः प्रश्नः स
यस्य भवति यत्संबन्धिशुभाशुभं पृच्छ्यते इति काशिका
राधेरीक्षेश्च दैवपर्यालोचनमर्थः दैवं शुभाशुभं चतुर्थ्या
समवेतत्वमर्थः कृष्णाय राध्यति ईक्षते वा गर्ग इत्यत्र
कृष्णसमवेतशुभाशुभपर्यालोचनाश्रयो गर्ग इत्यन्वयबोधः
कृष्णस्य कीदृशं शुभमशुभं वेति प्रश्नस्य गोचरता तु

कृष्णपदेन न प्रतिपाद्यते किं तु व्यञ्जनयाऽथ वा वि-
प्रश्नानन्तरितशुभाशुभपर्यालोचनं राधीक्ष्योरर्थं इति
धातुनैव विप्रश्नगोचरताप्रत्याय्यते इति संप्रदायः । व-
स्तुतस्तु विप्रश्नः शुभाशुभप्रश्नः शुभाशुभजिज्ञासाप्रयो-
ज्यकिमादिशब्दघटितवाक्यमिति यावत् तत्र विप्रश्नस्त-
त्प्रयोजिका जिज्ञासा वा चतुर्थ्यर्थः दैवपर्यालोचनं रा-
धीक्ष्योरर्थे प्रयोज्यतयाऽन्वेति चतुर्थ्यर्थे जिज्ञासायां वि-
षयितया प्रकृत्यर्थस्यान्वयः यत्संबन्धित्वेन शुभाशुभजि-
ज्ञासा तस्यैव शुभाशुभविषयतानिरूपितविषयितया
जिज्ञासायामन्वयः ईदृशविषयितयैव प्रकृत्यर्थस्यान्वयः
तेन मैत्रपुत्रस्य किं शुभमशुभं वेति प्रश्ने मैत्राय राध्यतीति
न प्रयोगः । एवं कृष्णाय राध्यतीक्षते वा गर्ग इत्यत्र
कृष्णविषयशुभाशुभजिज्ञासाप्रयोज्यशुभाशुभपर्यालोचना-
श्रयो गर्ग इत्यन्वयबोधः । धात्वर्थघटकशुभाशुभे कृष्णस-
मवेतत्वमर्थात्प्रतीयते धात्वर्थो तादृशजिज्ञासाप्रयोज्य-
त्वान्वयबलात् अत एव देवदत्ताय राध्यतीक्षते वा नै-
मित्तिकः पृष्टः सन् देवदत्तस्य दैवं पर्यालोचयतीत्यर्थं
इति काशिका विप्रश्नवाक्यं न धात्वर्थे घटते न वा च-
तुर्थ्यर्थः किं तु शुभाशुभजिज्ञासैव यत्र न प्रश्नवाक्यं स्व-
स्यैव शुभाशुभजिज्ञासा तत्रापि वराय कन्यायै वा रा-
ध्यति नैमित्तिक इति प्रामाणिकः प्रयोग इति । प्रत्या-
ङ्पूर्वस्य श्रुवो योगे चतुर्थीं ज्ञापयति । "प्रत्याङ्भ्यां
श्रुवः पूर्वस्य कर्ता" इति सूत्रं प्रतिपूर्वकस्याङ्पूर्वकस्य
च शृणोतेः पूर्वस्य कर्ता तदर्थप्रयोजकक्रियाकर्ताऽस्य
धातोर्योगे संप्रदानसंज्ञो भवतीत्यर्थकं प्रतिशृणोतेरा-

शृणोतेश्च याञ्चापूर्वकः स्वीकारो देयत्वेनाभ्युपगमोऽर्थः याञ्चान्वयिकर्तृत्वं चतुर्थ्यर्थः द्विजाय गां प्रतिशृणोत्या-शृणोति वेत्यत्र गोकर्मत्वं याचनस्वीकारयोरुभयोरन्वेति तथा च द्विजकर्तृकगोकर्मकयाचनपूर्वको गोकर्मकः दे-यत्वेनाभ्युपगमो वाक्यार्थः यत्तु ।

संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः ।
अङ्गीकारोऽभ्युपगमप्रतिश्रवसमाधयः ॥

इति नामलिङ्गानुशासनमभ्युपगममात्रार्थकसंश्रवप-र्यायत्वेन प्रतिश्रवाश्रवौ पपाठ तद्विशेष्यस्वरूपैकदेशप-र्यायतां ज्ञापयतीति संप्रदायः । वस्तुतस्तु प्रतिशृणोते-राशृणोतेश्चाभ्युपगमोऽर्थः स च क्रियागोचरकर्तव्यत्वा-ध्यवसायः क्रिया च क्वचिद्दानरूपा क्वचिदन्यादृशी अ-त एव नामलिङ्गानुशासनसंमता संश्रवप्रतिज्ञानपर्या-यता प्रतिश्रवाश्रवयोरुपपद्यते चतुर्थ्याः प्रयोजकतयोप-लक्षितो व्यापारोऽर्थः स च क्वचित् याञ्चास्वरूपः यत्र प्र-तिशृणोतेर्दानगोचरकर्तव्यत्वाध्यवसायोऽर्थः क्वचिदन्या-दृशः यत्र दर्शनधातोरन्यादृशोऽर्थः अत एव प्रतिपूर्व आङ्पूर्वस्य शृणोतिरभ्युपगमे प्रतिज्ञाने वर्तते स चा-भ्युपगमः परेण प्रयुक्तस्य सतो भवति तत्र प्रयोक्ता पू-र्वस्याः क्रियायाः कर्ता संप्रदानसंज्ञो भवतीति का-शिका एवं विप्राय गां प्रतिशृणोति आशृणोति वा राजेत्यत्र प्रतिशृणोतेर्दानकर्तव्यत्वाध्यवसायोऽर्थः चतुर्थ्या याञ्चारूपो व्यापारोऽर्थः दानं परस्वत्वानुकूलः स्वत्वध्वंसः याञ्चा लिप्सा प्रतिग्रह इति यावत् प्रकृत्यर्थस्य याञ्चा-यां कर्तृतयाऽन्वयः याञ्चायाः प्रयोज्यतया दाने तद्गोच-

स्वकर्तव्यत्वज्ञाने वाऽन्वयः दानं कर्तव्यत्वप्रकारकं ज्ञानं खण्डशो धात्वर्थः दानं विशेष्यितया कर्तव्यताज्ञानेऽन्वे-ति प्रतिग्रहः स्वत्वमिच्छा चेति खण्डशश्चतुर्थ्यर्थः स्व-त्वमुद्देश्यितयेच्छायामन्वेति कर्तृत्वमाधेयत्वं संसर्ग इ-च्छान्वयघटको बोध्यः गोकर्मकत्वं दानेऽन्वेति तथा च विप्रसमवेतस्वत्वोद्देश्यताकेच्छाप्रयोज्यगोवृत्ति-स्वत्वा-नुकूलस्वत्वध्वंसविशेष्यताककर्तव्यत्वप्रकारकज्ञानाश्रयो राजेत्यन्वयबोधः प्रतिग्रहस्य याच्ञाया गोविषयकत्व-मर्थादवगम्यते न ह्यन्ययाच्ञाप्रयोज्यं गोदानं भवति क-र्तव्यत्वप्रकारतानिरूपितविशेष्यता स्वत्वध्वंसे अर्थाद-वगम्यते तत एव कर्तव्यत्वं स्वत्वध्वंसेऽवसीयते प्रति-ज्ञानं तथाऽध्यवसाय एव अत एव देवदत्ताय गां प्रति-शृणोति प्रतिजानीत इत्यर्थ इति काशिका । अन्यात्तु-श्रक्रियागोचरकर्तव्यत्वाध्यवसायः प्रतिश्रवः चतुर्थ्यास्त्व-न्यात्तुशो व्यापारोऽर्थो यथा ब्रह्मचारिणे शतपथब्राह्मणं प्रतिशृणोत्युपाध्याय इत्यत्रानुपूर्वीविशेषप्रकारकज्ञानस्य प्रतिपादकतासंसर्गेणार्थवत्त्वप्रकारकज्ञानस्य वाऽनुकूलो व्यापारोऽध्यापनं तद्गोचरकर्तव्यत्वाध्यवसायः प्रतिशृणो-तेरर्थश्चतुर्थ्या आनुपूर्वीविशेषेणार्थवत्त्वेन वा जिज्ञासाऽर्थः शतपथब्राह्मणविशेषितं विशेष्यित्वं तत्संबन्धावच्छि-न्नाधेयत्वं वा द्वितीयार्थः फलीभूते ज्ञानेऽन्वेति ज्ञा-नस्याध्यापनफलस्याभ्युपगमफलत्वानपायात् जिज्ञा-साया प्रयोज्यतया अभ्युपगमेऽन्वयस्तथा च शतपथब्रा-ह्मणविशेष्यताकस्यानुपूर्वीविशेषप्रकारकस्यार्थवत्त्वप्र-कारकस्य वा ज्ञानस्यानुकूलो यो व्यापारः तद्गोचरो

यो ब्रह्मचारिसमवेतजिज्ञासाप्रयोज्यः कर्तव्यत्वाध्यवसायस्तदाश्रयः उपाध्याय इत्यन्वयबोधः । अभ्युपगमे फले ज्ञाने ब्रह्मचारिसमवेतत्वमर्थात्प्रतीयते यथाऽभ्युपगमफले स्वत्वे विप्रनिरूपितत्वमिति न ह्यन्यदीयजिज्ञासाप्रयोज्योऽभ्युपगमोऽन्यदीयज्ञानफलकः यथा विप्राज्ञाप्रयोज्योऽभ्युपगमः न क्षत्रियादिस्वत्वफलक इति । क्वचित्कर्तव्यत्वाध्यवसाय एव प्रतिशृणोतेरर्थः यत्र तद्विषयो धातुना पदान्तरेण वा प्रत्याय्यते यथाऽनुमाननिरूपणं शिष्याय प्रतिशृणोतीत्यत्र निरूपणं ल्युडन्तधात्वर्थस्तत्र प्रयोज्यतया शिष्यजिज्ञासाया अन्वय इति ।

शतमागांसि सोढाहे सूनोस्त इति यत्त्वया ।
प्रतीच्यं तत्प्रतीच्यायै पितृष्वस्रे प्रतिश्रुतम् ॥

इत्यत्र त्वत्सूनुप्रयोज्यागःशतकर्मकभाविसहनकर्तृत्वमिति शब्दार्थौ यच्छब्दार्थोभिन्नप्रतिश्रवकर्मत्वभेदेनान्वेति प्रतिश्रवोऽत्र कर्तव्यत्वाध्यवसायस्तद्विशेषणस्तत्कर्मसहनकर्तृत्वे कर्तव्यत्वाध्यवसायः सहनमादाय पर्यवस्यति आगोऽनिष्टाचरणसहनं तज्जन्यफलोपभोगस्तद्विषयकद्वेषाभावो वा द्वेषाभावे कर्तव्यत्वं क्षेमसाधारणं बोध्यं यथा मीमांसकानां कलञ्जभक्षणाभाव इति चतुर्थ्यास्तु पूर्वगतानिष्टस्याचरणे द्वेषस्तथाविधाचरणाभावे इच्छा वाऽर्थः पितृष्वसृविशेषितः कर्तव्यत्वाध्यवसाये प्रयोज्यतयाऽन्वेतीत्येवमन्यत्राप्यूहनीयमिति । अनुप्रतिपूर्वस्य गृणातेर्योगे चतुर्थीं ज्ञापयति । "अनुप्रतिगृणश्च" इति सूत्रम् । अनुपूर्वकस्य प्रतिपूर्वकस्य च गृणातेर्योगे तदर्थ-

पूर्ववर्तिन्या क्रियायाः कर्तृभूतं कारकं संप्रदानसंज्ञं भवतीत्यर्थकम्। अनुगृणातेः प्रतिगृणातेश्च शंसनपूर्वकं प्रोत्साहनमर्थः शंसनं कथनं प्रोत्साहनं हर्षानुकूलो व्यापारः होत्रे प्रतिगृणात्यनुगृणाति वा अध्वर्युरित्यत्र चतुर्थ्याः शंसने हर्षे चान्विता वृत्तिरर्थस्तथा च होतृवृत्तिशंसनपूर्वकस्य होतृवृत्तिहर्षानुकूलस्य व्यापारस्य कर्ताऽध्वर्युरित्यन्वयबोध इति संप्रदायः। वस्तुतस्तु शंसनपूर्वकतयोपलक्षितं प्रोत्साहनमनुगृणातेरर्थः शंसनपूर्वकत्वं तु शंसनज्ञानसापेक्षज्ञानविषयत्वं तदुपलक्षितं स्वरूपसत्संबन्धीत्यर्थः यच्च काशिकायां होत्रेऽनुगृणाति होता प्रथमं शंसति तमन्यः प्रोत्साहयतीत्युक्तं तत्र शंसने प्रथमत्वं न पूर्ववृत्तित्वं किं तु पूर्वज्ञानविषयत्वमत एवाग्रे काशिकायामनुगृण इति प्रतिगृण इति हि शंसितुः प्रोत्साहने वर्तत इत्युक्तं शंसितुरित्युक्तं न तु प्राक्शंसितुरिति प्रोत्साहनयुक्तमेव हर्षणमथ वा प्रोत्साहनानुकूलो व्यापारः उत्साहोऽध्यवसायस्तत्र प्रकर्षः कर्तव्यत्वगोचरत्वं तेन कर्तव्यताऽध्यवसायानुकूलो व्यापार इति निष्कर्षः। प्रतिशृणोतेस्तथाऽध्यवसायो व्यापारतयाऽस्य फलतयाऽर्थ इति पूर्वसूत्रार्थस्यैव तत्सूत्रार्थे प्रसङ्गसंगतिरप्यायाति चतुर्थ्याः शंसनमर्थस्तस्य स्वज्ञानादिद्वारकप्रयोज्यतया हर्षणे विशेषितया कर्तव्यत्वाध्यवसाये वाऽन्वयः शंसने प्रकृत्यर्थस्याधेयत्वलक्षणकर्तृतयान्वयः। एवं होत्रेऽनुगृणाति प्रतिगृणाति वाऽध्वर्युरित्यत्र होतृवृत्तिशंसनप्रयोज्यहर्षणाश्रयोऽध्वर्युरित्यन्वयबोधः अथ वा कर्तव्यत्वाध्यवसाये शंसनस्य सामा-

नाधिकरण्येनाऽन्वयः सामानाधिकरण्यमेककालाव-
च्छेदेनैकत्र वर्तमानत्वं तथा च होतृवृत्तिशंसनस्य समा-
नाधिकरणस्तद्विशेष्यताकस्य यः कर्तव्यत्वप्रकारकोऽध्य-
वसायस्तदनुकूलव्यापाराश्रयोऽध्वर्युरित्यन्वयबोधः । पर-
म्परया शंसनफलकस्य हर्षणस्यापेक्षया साक्षात् शंस-
नफलकस्य कर्तव्यत्वाध्यवसायस्य धात्वर्थत्वमुचितं न च
हर्षणं न शंसनफलकमिति वाच्यं तथासति हर्षकस्य
व्यर्थव्यापारतया प्रमत्तत्वापत्तेः । एवं होत्रेऽनुगृणाति
होतारं शंसन्तं प्रोत्साहयतीत्यर्थं इति काशिका लड्द्वय-
प्रयोगं दर्शयन्ती कालघटितसामानाधिकरण्येनान्वयं
सूचयति एवं निन्दकायानुगृणाति खल इत्यादावन्य-
त्रापीयं रीतिर्बोध्येति । परिक्रयार्थकधातुयोगे चतुर्थीं
ज्ञापयति । "परिक्रयणे संप्रदानमन्यतरस्याम्" इति सूत्रं
परिक्रयणे साधकतमं संप्रदानसंज्ञं भवतीत्यर्थकमन्य-
तरस्यामित्यनेन करणसंज्ञकमपि तद्बोध्यते वेतनदा-
नादिपूर्वको नियतकालावच्छेद्यस्वत्वानुकूलो व्यापारः
परिक्रय इत्युच्यते तत्र करणत्वार्थिका तृतीया चतुर्थी
च भवति शताय शतेन वा परिक्रीतो वृषभ इत्यत्र च-
तुर्थीतृतीययोः करणत्वं व्यापारोऽर्थः स च व्यापारो
दानं जन्यतया परिक्रयफले स्वत्वेऽन्वेति तथा च शत-
दानजन्यस्य परिक्रयप्रयोज्यस्वत्वस्याश्रयाभिन्नो वृषभ इ-
त्यन्वयबोधः । परिक्रयजन्यं च स्वत्वं तत्रैव वस्तुनि व्य-
वस्थितकालमवस्थाय नश्यति व्यवस्थितकालानन्तरं तु
स्वत्वान्तरमुत्पद्यते ऽथ वा व्यवस्थावशादेकमेव स्वत्वं
कालान्तरव्यापकं भवतीति संप्रदायः । स्वतन्त्रास्तु ब्रु-

तिदानजन्यनियतकालकस्वत्वजनकः परिग्रहः परि-
क्रय इत्युच्यते तत्र भृतौ तादात्म्येन शतस्यान्वयः संस-
र्गतया लब्धकरणत्वस्यानुवादिका तृतीया चतुर्थी च
ज्योतिष्टोमेन यजेतेत्यत्र तृतीयावदित्याहुः। वस्तुतस्तु
भोगजनकनियतकालकस्वत्वफलको व्यापारः परिक्रयः
स च व्यापार इच्छैव भृतिः शतादिका मासादिभोग-
व्यवस्थया गृहीता मासादिव्यापकं परकीयस्वत्वं जनयति
भृतिदानजनितस्वत्वं भोगं जनयति न तु विक्रयदा-
नादिकं परिक्रेतृकृतविक्रयदानादेरसिद्धेः भोगस्य वि-
क्रयो दानं च परिक्रेतुरपि सम्भवति। एवं शताय श-
तेन वा परिक्रीतो वृषभ इत्यत्र चतुर्थीतृतीययोः करण-
त्वं व्यापारोऽर्थः स च व्यापारः परस्वत्वोपहितं दानं श-
तवृत्तिस्वत्वं प्रति तादात्म्येन शतस्य जनकत्वात् स्वत्वो-
पहिते दाने स्वत्वद्वारकं शतस्य जन्यत्वमिति शतव्या-
पारत्वमक्षतं यदि च भाविदानेन परिक्रयव्यवहारो न
गौणस्तदा शतस्य स्वत्वज्ञानद्वारकं दाने जन्यत्वमिति त-
द्व्यापारत्वं बोध्यमिति शतस्य जन्यतया कर्मतया च
व्यापारे दाने तस्य परिक्रयफले तथाविधस्वत्वे ऽन्वय-
स्तत्रैव स्वत्वे परिक्रयव्यापारस्येच्छाया उद्देश्यत्वेना-
ऽन्वयस्तस्य स्वत्वस्य कर्मक्तप्रत्ययार्थे आश्रयेऽन्वयः यदि
च परिक्रयकर्मणो विद्यमानतायामपि परिक्रयव्यवहार-
स्तदा क्तप्रत्ययार्थो निरूपकं तत्रैव तस्य स्वत्वस्यान्वय-
स्तथा च शतजन्यतत्कर्मकदानजन्यस्येच्छोद्देश्यस्य भोग-
जनकनियतकालकस्वत्वस्याश्रयो निरूपको वा वृषभ इ-
त्यन्वयबोधः। यत्र व्यवस्थितकालकं न स्वत्वं भृतिश-

षस्य प्रत्यर्पणेन परिक्रेयस्यापचारेण वा तत्र परिक्रय-व्यवहारार्थं तथाविधस्वत्वोद्देश्यिकेच्छा परिक्रीणातेर-भिधेयत्वेनोक्ता नियतकालकस्वत्वं प्रति तु स्वनिष्ठाभं कारणमत एव परिक्रयणं नियतकालं वेतनादिना स्वी-करणं नात्यन्तिकः क्रय एवेति काशिका न चात्र वेत-नदानादिजन्यनियतकालकस्वत्वानुकूलव्यापारः परि-क्रीणातेरर्थः परिक्रय इति वाच्यं तथासति नियतका-लमित्युपादानवैयर्थ्यापत्तेः वेतनदानादिजन्यस्वत्वस्या-वश्यं नियतकालकत्वात् वेतनाय शताय वेतनेन शतेन वा परिक्रीत इत्यादावनन्वयप्रसङ्गाच्च भृतेस्तच्छेषस्य वा प्रत्यर्पणं व्यवस्थितकालनाशो वा वेतनदानजस्वत्वनाशं प्रति हेतुरित्यन्यत्र विस्तरः । यजतियोगे संप्रदानस्य क-र्मत्वं बोधयति । "कर्मणः करणसंज्ञा वक्तव्या संप्रदा-नस्य कर्मसंज्ञेति" वार्त्तिकं कर्मणि द्वितीयायाः संप्रदा-ने चतुर्थ्याश्चापवादः यजतियोगे करणसंज्ञाकर्मसंज्ञा-विधानात् । एवं पशुना रुद्रं यजत इत्यत्र यजतेर्मन्त्र-करणकः स्वत्वध्वंसफलकस्त्यागोऽर्थः । यच्च काशिकायां पशुना रुद्रं यजते पशुं रुद्राय ददातीत्यर्थ इति स्वत्व-फलकत्यागार्थकददातिना यजतिविवरणं तत्त्यागस्यै-कदेशार्थाभिप्रायेण यथोपेच्छावारणाय ददात्यर्थे स्वत्व-फलकत्वं तथा यजत्यर्थे मन्त्रकरणकत्वं विशेषणं प्रकृते ददातिर्यजतिपर्याय एव देवानां विनियोगाभावात् स्व-त्वाप्रसक्तेः देवस्वमित्यादौ देवप्रीत्युद्देश्यकत्यागकर्म-त्वं देवस्वत्वं प्रतीयत इत्यन्यत्र विस्तरः । तृतीयायाः कर्मत्वमाधेयत्वं स्वत्वध्वंसान्वय्यर्थः चतुर्थ्याः प्रीतिर-

र्थस्तस्या उद्देश्यितया त्यागेऽन्वयः प्रीतौ प्रकृत्यर्थस्य स-
मवेतत्वेन तदवच्छिन्नावच्छेदकतानिरूपकतया वाऽन्व-
यः तथा च शिवसमवेतप्रीत्युद्देश्यिकः पशुनिष्ठस्वत्व-
ध्वंसफलको मन्त्रकरणकस्त्यागो वाक्यार्थः यदि च शि-
वसमवेता प्रीतिरप्रसिद्धा तदा शिवस्य समवेतत्वसं-
सर्गावच्छिन्नस्वनिष्ठावच्छेदकतानिरूपकज्ञानविषयत्वसं-
बन्धेन प्रीतावन्वयः शिवप्रीतिरिष्टसाधनमिति ज्ञा-
नस्य प्रीतिनिष्ठविषयतायाः शिवनिष्ठावच्छेदकतानिरू-
पितत्वादिति एवं शिवनिष्ठावच्छेदकतानिरूपकज्ञान-
विषयप्रीत्युद्देश्यकस्तथाविधस्त्यागो वाक्यार्थ इति । ग-
त्यर्थकर्मणि वैकल्पिकीं चतुर्थीं ज्ञापयति “ गत्यर्थकर्म-
णि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ” इति सूत्रं
गत्यर्थधातुयोगे तदर्थकर्मणि चेष्टायां तदर्थे सति अध्व-
वर्जिते द्वितीयाचतुर्थ्यौ भवत इत्यर्थकम् ओदनं पचती-
त्यत्र कर्मणि चतुर्थीवारणाय गत्यर्थग्रहणं अश्वेन गच्छ-
तीत्यत्र करणे चतुर्थीवारणाय कर्मणीत्युक्तं मनसा हरिं
व्रजतीत्यत्र कर्मणि चतुर्थीवारणाय चेष्टायामित्युक्तं चे-
ष्टाऽत्र परिस्पन्दरूपा बोध्या तेन ग्रामाय रथो गच्छतीत्यत्र
न चतुर्थ्यनुपपत्तिः अत एव काशिकायां चेष्टाक्रियाणां
परिस्पन्दनक्रियाणां कर्मणीत्युक्तम् । अध्वानं गच्छतीत्यत्र
कर्मण्यध्वनि चतुर्थीवारणायानध्वनीत्युक्तम् । आस्थित-
प्रतिषेधश्चायं विज्ञेयः आस्थितः संप्राप्त आक्रान्त उच्यत
इति काशिका अत आक्रान्ते अध्वनि चतुर्थी निषि-
ध्यते यदा तु पन्थानमाक्रान्तुमिच्छति तदा चतुर्थी
भवत्येव यथा ऽयमुत्पथात्पथेऽध्वने वा गच्छतीति । एवं

# विज्ञप्तिः ।

१ अस्यां चौखम्बा-संस्कृतग्रन्थमालायां प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्त्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते ।
२ एकस्मिन् स्तवके एक एव ग्रन्थो मुद्यते ।
३ प्राचीना दुर्लभाश्चाऽमुद्रिता मीमांसावेदान्तादिदर्शन, व्याकरण, धर्मशास्त्र, साहित्य, पुराणादिग्रन्था एवात्र सुपरिष्कृत्य मुद्यन्ते ।
४ काशिकराजकीयप्रधानसंस्कृतपाठालयाऽध्यापकाः पण्डिता अन्येच शास्त्रदृष्टयो विद्वांसः एतत्परिशोधनादिकार्यकारिणो भवन्ति ।
५ भारतवर्षीयैः ब्रह्मदेशीयैः सिंहलद्वीपवासिभिश्च एतद्ग्राहकैर्देयं वार्षिकमग्रिमं मूल्यम् मुद्राः ७ आणकाः ८
६ कालान्तरे प्रतिस्तवकं " " १ ०
७ प्रापणव्ययः पृथग् नास्ति ।
८ साम्प्रतं मुद्यमाणा ग्रन्थाः- मुद्रिताः स्तवकाः

| | | |
|---|---|---|
| (१) संस्कारत्नमाला । गोपीनाथभट्टकृता | ( संस्कारः ) | २ |
| (२) शब्दकौस्तुभः । भट्टोजिदीक्षितकृतः | ( व्याकरणम् ) | १० |
| (३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृत-न्यायरत्नाकराख्यया व्याख्यया सहितम् सम्पूर्णम् । | ( मीमांसा ) | १० |
| (४) भाष्योपबृंहितं तत्त्वत्रयम् विशिष्टाद्वैतदर्शन प्रकरणम् श्रीमल्लोकाचार्य्यप्रणीतम् । श्रीनारायणतीर्थ विरचित भाट्टभाषा प्रकाश सहितम् । | ( वेदान्तः ) | २ |
| (५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः सम्पूर्णः | ( ज्योतिषः ) | १ |
| (६) भाट्टचिन्तामणिः महामहोपाध्यायः श्रीगागाभट्ट विरचितः । तर्कपादः | ( मीमांसा ) | २ |
| (७) न्यायरत्नमाला-श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः । | (मीमांसा) | २ |
| (८) ब्रह्मसूत्र भाष्यम्-वादरायण प्रणीत वेदान्त सूत्रस्य यतीन्द्र श्रीमद्विज्ञानभिक्षु कृत व्याख्यानम् । | ( वेदान्त ) | ६ |
| (९) स्याद्वादमञ्जरी-मल्लिषेणनिर्मिता । | ( जैनदर्शनम् ) | २ |
| (१०) सिद्धित्रयम्-विशिष्टाद्वैत-ब्रह्मनिरूपणपरम्-श्रीभाष्यकृतां परमगुरुभिः श्री ६ यामुनमुनिभिर्विरचितम् । | (वेदान्त) | १ |
| (११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः आचार्यचित्सुखमुनिविरचित व्याख्योपेतः | ( वेदान्तः) | २ |
| (१२) विभक्त्यर्थनिर्णयः न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म०म० श्रीगिरिधरोपाध्यायरचितः। | (न्यायः) | ३ |
| (१३) विधिरसायनम् श्रीअप्पयदीक्षितकृतम् | ( मीमांसा ) | २ |

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा-संस्कृतपुस्तकालय बनारस सिटी ।